विश्वकर्मप्रकाशे—

स्वातीमैत्रेऽथ माहेन्द्रे गान्धर्वे भगरौहिणे ।
स्तंभोच्छ्रायादिकर्तव्यमन्यत्र परिवर्जयेत् ॥ ७२ ॥

स्वाती, अनुराधा, ज्येष्ठा, गान्धर्व ( धनिष्ठा ), पूर्वाफाल्गुनी, रोहिणी, इनमें स्तंभ की उँचाई आदि करनी चाहिये, अन्यत्र नहीं ॥ ७२ ॥

द्व्यङ्गे वा स्थिरभे च सौम्यसहिते लग्नेशुभैर्वीक्षिते ।
सौम्यैर्वीर्यसमन्वितैश्च दशमे निर्माणमाहुर्बुधाः ॥
तैर्वाधीनवकेन्द्रगैः सुफलदं पापैस्त्रिषष्ठायगैः ।
क्रूरोह्यष्टमसंस्थितोपि मरणं कर्तुर्विधत्ते तराम् ॥ ७३॥

शुभग्रह से युक्त और दृष्ट, द्विस्वभाव और स्थिरलग्न में वास्तु शुभ है। शुभग्रह बलवान होकर दशमस्थान में हो तो वास्तु शुभ है अथवा शुभग्रह पञ्चम नवम और केन्द्र १, ४, ७, १० में हो और पापग्रह तृतीय षष्ठ और एकादश में हों तो गृह शुभ होता है, यदि अष्टम स्थान में पापग्रह हो तो गृहेश की मृत्यु करता है ॥ ७३ ॥

इसी वाक्य के अनुसार श्रीपति का भी वचन है यथा—

व्यङ्गेस्थिरेवाभवनेविलग्ने सौम्यग्रहैर्युक्तनिरीक्षितेच ।
कर्मस्थितैर्वीर्ययुतैश्चसौम्यैर्निर्माणमाहुर्भवनस्यसन्तः ॥
पापैस्त्रिषष्ठायगतैस्त्रिकोणे केन्द्राश्रितैस्साधुभिरालयस्य ।
वदन्तिनिर्माणमिहाष्टमस्थः क्रूरस्तु कर्तुर्मरणं करोति ॥

तथा च रामदैवज्ञः—

भौमार्कारिक्तामाद्यूने चरोनाङ्गे विपञ्चके ।
व्यष्टान्त्यस्थैःशुभैर्गेहारम्भस्त्र्यायारिगैः खलैः ॥ ७४ ॥

मङ्गल रविवार रिक्ताअमावास्या सप्तमी तिथी चरलग्न वाणपञ्चक इन सबों को त्याज्य करके अष्टम द्वादश से अतिरिक्त शुभग्रह और तृतीय षष्ठ एकादश में पाप ग्रह हों तो गृहारम्भ शुभ होता है ॥ ७४ ॥

वास्तुप्रदीपे—

शनौस्वाती सिंहलग्ने शुक्ल पक्षश्च सप्तमी ।
शुभयोगः श्रावणश्च सकाराः सप्तकीर्तिताः ॥ ७५ ॥

सप्तानां योगतो वास्तुः पुत्रवित्तप्रदः सदा ।
गजश्च धनधान्यादि पुरोतिष्ठन्ति सर्वतः ॥ ७६ ॥

शनिवार स्वातीनक्षत्र सिंहलग्न शुक्लपक्ष सप्तमीतिथि शुभयोग और श्रावण मास इन सात सकारों के योग से जो वास्तु किया जाय तो पुत्र धन सदा देता है, तथा हस्ती धन धान्य भी हमेशः वर्तमान रहता है ॥ ७५ ॥ ७६ ॥

वास्तुराजवल्लभे—

जीवः सौख्यमुपाकरोति भृगुजोधान्यं श्रियं चन्द्रमाः
सूर्यो वेश्मपतिश्चतुष्टयमिदं नीचास्तगं दुर्बलम् ।
जीवेलग्नमुपागते शशिसुते यामित्रगेऽर्के रिपौ
शुक्रेऽब्धौ सहजेशनौ च शरदां गेहं शतं तिष्ठति ॥ ७७ ॥

बृहस्पती बलयुक्त हो तो सौख्य, शुक्र हो तो धान्य, चन्द्रमा लक्ष्मी, और सूर्य बलवान् हो तो गृहेश को सौख्य करता है । परञ्च ये चारो ग्रह नीच में अथवा अस्तंगत हों तो दुर्बल हो जाते हैं । बृहस्पति लग्न में, बुध सप्तम में, सूर्य षष्ठ में, शुक्र चतुर्थ में और शनि तृतीय में हो तो वह गृह १०० वर्ष तक रहता है ॥ ७७ ॥

भृगुसुत इह लग्ने ह्यायगेऽर्के च खे ज्ञे ।
गृहमपि शतमब्दान्स्थायि केन्द्रे सुरेज्ये ॥
द्विगुणमपि च शुक्रे मूर्तिगे विक्रमेऽर्के ।
सुरगुरु सुतसंस्थे भूमिपुत्रे च षष्ठे ॥ ७८ ॥

शुक्र लग्न या एकादश में सूर्य बुध दशम और बृहस्पती केन्द्र में हो तो सौ वर्ष तक गृह रहे । एवं शुक्र लग्न में सूर्य तृतीय में बृहस्पति पञ्चम में और मंगल षष्ठ में हो तो वह गृह दो सौ २०० वर्ष तक रहे ॥ ७८ ॥

अथ तन्वादिस्थितग्रहफलम्—

लग्नेऽर्के वज्रपातः स्यात्कोशहानिश्च शीतगौ ।
मृत्युर्विश्वंभरःपुत्रे दारिद्र्यं रविनन्दने ॥ ७९ ॥

जीवे धर्मादिकामाः स्युः सुतोत्पत्तिश्च भार्गवे ।
चन्द्रजे कुशला शक्तिर्जनस्यायुः प्रवर्द्धते ॥ ८० ॥

लग्न में सूर्य होने से वज्रपात, चन्द्रमा से कोश हानि, मंगलसे मृत्यु, बुध से कुशल शक्ति और आयु की वृद्धी, वृहस्पति से धर्मादिकृत्य, शुक्र में पुत्रोत्पत्ति, और शनि यदि लग्न में हो तो दारिद्र्य करता है ॥७९-८०॥

द्वितीयस्थे रवौ हानिश्चन्द्रे शत्रुक्षयो भवेत् ।
भूसुते बन्धनं प्रोक्तं नानाविघ्नाश्च भानुजे ॥ ८१ ॥
बुधे द्रविणसंपत्तिर्गुरौ धर्म समागमः ।
यथा काम विनोदेन भृगौ कालं व्रजेदिह ॥ ८२ ॥

द्वितीय में सूर्य हानि करता है, चन्द्रमा शत्रु नाश करता है, मंगल बंधन करता है, बुध द्रव्य संपत्ति, वृहस्पति धर्मसमागम, शुक्र द्वितीय में यथा काम विनोद में ही काल व्यतीत करता है, और शनि नाना प्रकार का विघ्न करता है ॥ ८१-८२ ॥

सौम्यग्रहास्तृतीयस्थाः पापाअपि विशेषतः ।
सिद्धिःस्यादाचिरादेव यथाभिलषितं प्रति ॥ ८३ ॥
चतुर्थस्थानगेजीवे पूजासम्पद्यते नृपात् ।
चन्द्रजे च सदा लाभो भूमिलाभस्तु भार्गवे ॥ ८४ ॥
वियोगः सुहृदां भानौ मित्रभेदो धरासुते ।
बुद्धिनाशो निशानाथे महालाभोऽर्कनन्दने ॥ ८५ ॥

शुभग्रह यदि तृतीय में हो तो शुभ होता है, पापग्रह तृतीय का विशेष शुभद होता है. शीघ्रही मनोरथ पूर्ण करता है । चतुर्थ का गुरु राजद्वार से पूजन कराता है ।।

चतुर्थ का चन्द्रमा सदा लाभ करता है, शुक्र भूमिलाभ, सूर्य मित्र वियोग, मङ्गल मित्रभेद, चन्द्रमा बुद्धिनाश, चतुर्थ का शनि विशेष लाभ करता है ।

पञ्चमस्थे सुराचार्ये मित्रवस्त्र धनागमः ।
शुक्रे पुत्रधनप्राप्तिर्हेमाभरणमिन्दुजे ॥ ८६ ॥

सुतदुःखं सदा सूर्ये शशाङ्के कलहप्रियः।
भौमे काम विरोधः स्याच्छनौ कामविमर्दनम् ॥८७॥

पञ्चम में गुरू हो तो मित्र वस्त्र धन का आगम करता है शुक्र पञ्चम हो तो पुत्र धन का लाभ, बुध हो तो सुवर्ण भूषण की प्राप्ति होती है, सूर्य पञ्चम में हो तो पुत्र जन्य दुःख, चन्द्रमा हो तो कलह प्रिय, मङ्गल हो तो अकाम-विरोध और शनि पञ्चम हो तो काम विमर्दन होता है ॥ ८६ ॥ ८७ ॥

षष्ठस्थानगते सूर्ये पूजासम्पद्यते नृपात्।
चन्द्रे पुष्टिः कुजे प्राप्तिः सौरे शत्रुबलक्षयः ॥ ८८ ॥
गुरौ चार्थोदयः प्रोक्तो भृगौ विद्यागमो भवेत्।
मानज्ञानस्य कौशल्यं नक्षत्रपतिनन्दने ॥ ८९ ॥

षष्ठ स्थान में सूर्य हो तो राजा से पूजा होवै, चन्द्रमा हो तो तुष्टि, मङ्गल हो तो लाभ, शनि हो तो शत्रु के बल का नाश, गुरू हो तो अर्थोदय, शुक्र हो तो विद्यागम और बुध हो तो मान ज्ञान में कुशल होता है ॥ ८८ ॥ ८९ ॥

लग्नात्सप्तमगे जीवे बुधे दैत्य पुरोहिते।
गज-वाजि-धरित्रीणांक्रमाद्भोगं विनिर्दिशेत् ॥ ९० ॥
भास्करे कीर्तिभङ्गस्यात्कुजे विग्रहमादिशेत्।
चन्द्रे मन्दे युते मान्द्यं हीनाङ्गत्वं भयं तथा ॥ ९१ ॥

लग्न से सप्तम में गुरु हो तो हाथी, बुध हो तो घोड़ा, शुक्र हो तो भूमि का भोग करनेवाला होता है, सूर्य सप्तम हो तो कीर्ति भङ्ग, मङ्गल हो तो विग्रह, चन्द्रमा और शनि हो तो रोग अङ्गभङ्ग और भय होता है ॥ ९० ॥ ९१ ॥

निधनस्थे सहस्रांशौ शत्रुता विपदः सदा।
हानिः शीतमयूखे च मङ्गले रविजे भयम् ॥ ९२ ॥
बुधे मानधनप्राप्तिः सुरेज्ये विजयोमहान्।
शुक्रः स्वजनतो दद्यात्सुखं पुंसां विशेषतः ॥ ९३ ॥

अष्टम में सूर्य हो तो शत्रुजन्य विपत्ति सदा रहे, चन्द्रमा हो तो हानि, मङ्गल-शनि से भय, बुध से मानधन की प्राप्ती, बृहस्पतिसे विशेष विजय, और शुक्र यदि अष्टम हो जाय तो अपने जन के द्वारा सुख देता है ॥ ९२ ॥ ९३ ॥

नवमस्थानगे जीवे बुद्धिभाग्यविवर्द्धनम् ।
बुधे विविधभोगाप्तिः शुक्रे मन्दोदयो भवेत् ॥ ६४ ॥
चन्द्रे धातुक्षयः प्रोक्तो धर्महानिश्च भास्करे ।
कुजे सामर्थ्यहानिःस्याद्रविजे कामदूषणम् ॥ ६५ ॥

नवम में बृहस्पति होतो बुद्धि और भाग्य की वृद्धी, बुध हो तो विविध भोग की प्राप्ति, शुक्र हो तो साधारण भाग्योदय, चन्द्रमा हो तो धातुक्षीणता, सूर्य हो तो धर्म की हानि, मङ्गल हो तो शक्ति की हानि, और शनि यदि नवम में हो तो काम दूषण करता है ॥ ६४ ॥ ६५ ॥

दशमस्थानगे शुक्रे शयनासन सिद्धयः ।
सुराचार्ये महत्सौख्यं विजयश्च तथा बुधे ॥ ६६ ॥
मार्त्तण्डे धन वृद्धिश्च चन्द्रे कोषविवर्धनम् ।
भौमे बलं सदा पुंसां शनौ कीर्तिविलोपनम् ॥६७॥
लाभस्थानगताः सर्वे प्रयच्छन्ति शुभं फलम् ।
व्यये सर्वे सदौदास्यं प्रदिशन्ति विशेषतः ॥ ६८ ॥

दशम स्थान में शुक्र हो तो शयनासनकी वृद्धि, गुरु हो तो विशेष सौख्य, बुध हो तो विजय, सूर्य हो तो धन की वृद्धि, चन्द्रमा हो तो कोष ( खजाना ) की वृद्धि मङ्गल हो तो बलवान्, शनि हो तो कीर्तिलोप होता है । एकादश में सभी ग्रह विशेष शुभफल को देते हैं । और द्वादश में सभी ग्रह यदि हों तो सदाही विशेष उदासी रखते हैं ॥ ६६ ॥ ६७ ॥ ६८ ॥

जीवार्क विच्छुक्रशनैश्चरेषु
लग्नारियामित्रसुखात्रिगेषु ।
स्थितिः शतंस्याच्छरदां सितार्का-
रेज्येतनुत्र्यङ्गसुते शते द्वे ॥ ६९ ॥

अथ योगजस्तत्र रामदैवज्ञः—

यदि गुरुलग्न में सूर्य सप्तम में बुध चतुर्थ में और शनि तृतीय हो तो वह गृह १०० वर्ष तक रहता है, तथा शुक्र लग्न में सूर्य तृतीय में और मङ्गल षष्ठम में हो तो वह गृह २०० वर्ष तक रहता है ॥ ६९ ॥

लग्नाम्बरायेषुभृगुज्ञभानुभिः
केन्द्रेगुरौवर्षशतायुरालयम्।
बन्धौगुरुर्व्योम्निशशी कुजार्कजौ-
लाभे तदाशीतिसमायुरालयम् ॥१००॥

लग्न में शुक्र दशम में बुध एकादश में सूर्य और केन्द्र में गुरु हों तो वह गृह १०० वर्ष तक रहता है। चतुर्थ गुरु दशम चन्द्रमा मङ्गल और शनि एकादश में हों तो उस गृहकी आयु ८० वर्ष की होती है ॥ १०० ॥

स्वोच्चे शुक्रे लग्नगे वा गुरौ वेश्मगतेऽथवा।
शनौ स्वोच्चे लाभगे वा लक्ष्म्यायुक्तं चिरं गृहम् ॥१०१॥

अपने उच्चका शुक्र लग्न में अथवा बृहस्पति चतुर्थ में, वा अपने उच्चका शनि एकादश में हो तो वह गृह बहुत काल तक लक्ष्मी से युक्त रहै ॥ १०१ ॥

शत्रुक्षेत्रगतैः खेटैः नीचस्थैर्वापराजितैः।
प्रारम्भे यस्य भवने लक्ष्मीस्तस्य विनश्यति ॥१०२॥
द्यूनाम्बरे यदैकोऽपि परांशस्थो ग्रहो गृहम्।
अब्दान्तःपरहस्तस्थं कुर्याच्चेद्वर्णपोबलः ॥१०३॥

यदि तीन से अधिक ग्रह शत्रु क्षेत्र में वा नीच में हों या पराजित हों उस समय गृह बनाया जाय तो उस गृह की लक्ष्मी नाश हो जाती है। वा सप्तम या दशम में कोई ग्रह होकर शत्रु के अंश में हो तो वह गृह एक वर्ष के भीतरही दूसरेके हस्तगत हो जाय यदि वर्णपति निर्बल हों तो ॥१०२-१०३ ॥

पुष्यध्रुवेन्दुहरिसर्पजलैस्सजीवै-
स्तद्वासरेण च कृतं सुतराज्यदं स्यात्।
द्वीशाश्वितक्षवसुपाशिशिवैःसशुक्रे
र्वारेसितस्य च गृहं धनधान्यदं स्यात् ॥१०४॥

पुष्य उत्तरा ३ रोहिणी मृगशिरा श्रवण आश्लेषा पूर्वाषाढ़ ये नक्षत्र बृहस्पति से युक्त होकर रहे और गुरुवार हो तो उसमें बनाया हुआ गृह पुत्र और राज्य को देता है। विशाखा अश्विनी चित्रा धनिष्ठा शतभिषा और आर्द्रा

ये नक्षत्र शुक्र से युक्त होकर रहे और शुक्रकाही दिन हो तो निर्माण किया हुआ गृह धनधान्य को देता है । इसी वाक्य के अनुसार और भी वचन हैं ॥१०४॥

तथाच नारदः—

श्रवणाषाढयोश्चैव रोहिण्यां चोत्तरात्रये ।
गुरुवारे कृतं वेश्म राजयोग्यमिहोच्यते ॥
तद्गृहे जातपुत्रस्य राज्यं भवति निश्चितम् ।

एवमेव वसिष्ठः—

इज्योत्तरात्रयाहीन्दु विष्णुधातृजलोडुषु ।
गुरुणासहितेष्वेषु कृतं गेहं श्रियायुतम् ॥
अश्विनी शततारासु विशाखाभाद्रचित्रके ।
धनिष्ठादितिसंयुक्ते तथा वै शुक्रवासरे ॥
गृहंनाटकशालाख्यं देवागारं कृतं शुभम् ।
तद्वेश्मनि प्रजातस्तुकुवेरसदृशोभवेत् ॥

सौरैः करेज्यान्त्यमघाम्बुमूलैः
कौजेह्नि वेश्माग्नि सुतार्तिदं स्यात् ।
सज्ञैः कदास्रार्यमतत्त्वहस्तैः
ज्ञस्यैववारे सुखपुत्रदं स्यात ॥ १०५ ॥

हस्त पुष्य रेवती मघा पू. षा. और मूल ये नक्षत्र मंगल से युक्त होकर रहें और मंगल का वार भी हो तो इसमें बनाया हुआ गृह अग्नि और पुत्रजन्य कष्ट को देता है । एवं रोहिणी अश्विनी उ. फा. चित्रा. हस्त ये नक्षत्र बुध से युक्त होकर रहै और बुधका वार भी होतो इसमें बनाया गृह सुख और पुत्र को देता है ॥ १०५ ॥.

नारदः—

मूलं च रेवतीचैव कृत्तिकाषाढमेव च ।
पूर्वाफाल्गुनि हस्तश्च मघा चैवतुसप्तके ॥
एषु भौमेन युक्तेषु वारेतस्यैव वेश्मयत् ।
अग्निनादह्यतेकृत्स्नं पुत्रनाशश्च जायते ॥

वसिष्ठः—

हस्तार्यमत्वाष्ट्रदस्र चतुरास्येन्दुभेषु च ।
बुधेन सहितेष्वेषु धनपुत्रसुखोद्भवः ॥

अजैकपादहिर्बुध्न्यशक्रमित्रानिलान्तकैः ।
स मन्दैर्मन्दवारेस्याद्रक्षोभूतयुतं गृहम् ॥ १०६ ॥

पूर्व भाद्रपदा उत्तर भाद्रपदा ज्येष्ठा अनुराधा स्वाती भरणी इनमें किसी नक्षत्र का शनि हो और शनि का वार हो तो इसमें यदि गृह बनावै तो वह गृह राक्षस और भूत से युक्त रहता है ॥ १०६ ॥

तथाच वसिष्ठः—

अजपाद्दितयेयास्यमित्रेन्द्रानिलभेषु च ॥
यत्कृतं शनिसंयुक्ते दह्यते यत्न राक्षसैः ॥

नारदोऽपि—

ज्येष्ठानुराधकेचैव भरणी स्वाति पूर्वभे ॥
धनिष्ठास्वपि ऋक्षेषु शनिस्तिष्ठेद्दिनस्य च ॥
क्रपणेनामतः प्रोक्तोधनधान्यादिके गृहे ॥
पुत्रोजातोथवा तस्मिन्गृह्यते यत्न राक्षसैः ॥

गृहेश तत्स्त्रीसुखवित्तनाशो-
ऽर्केन्द्वीज्यशुक्रेविबलेऽस्तनीचे ।
कर्तुः स्थितिर्नोविधुवास्तुनोर्भे-
पुरःस्थितेपृष्ठगतेखनिः स्यात् ॥ १०७ ॥

सूर्य चन्द्रमा वृहस्पति और शुक्र इन चारों में कोई भी यदि निर्बल अस्तंगत अथवा नीच में हो तो क्रम से गृहेश गृहेश की स्त्री सुख और धन का नाश करता है । चन्द्रमा और गृहका नक्षत्र ये दोनों यदि आगे पड़े तो उस गृह में गृहकर्ता की स्थिति नहीं होती, उपर्युक्त दोनों नक्षत्र यदि पीछे पड़े तो चोरी का भय होता है ॥ १०७ ॥

श्रीपतिरपि—

रवौ गृहेशो गृहिणी शशाङ्के धनं सिते देवगुरौ च सौख्यम् ।
विनाशमायान्ति बलेनहीने नीचस्थिते वास्तमुपागते वा १०८॥

वसिष्ठः—

नीचे शत्रुगते जीवे शुक्रे वा यदि वा बुधे ।
शशाङ्के वा कृतं गेहमातिनिःस्वत्वमाप्नुयात् ॥ १०९ ॥

ब्रह्मशम्भुः—

गृहायलब्धऋक्षेषु यत्रऋक्षे च चन्द्रमा ।
शलाकासप्तकंदेयं कृत्तिकादिक्रमेण च ॥ ११० ॥
वामदक्षिणभागेतु प्रशस्तं शांतिकारकम् ।
अग्रे पृष्ठे न दातव्यं यदीच्छेच्छ्रेयमात्मनः ॥ १११ ॥

भृगुः—

चक्रे सप्तशलाकाख्ये कृत्तिकादीनि विन्यसेत् ।
ऋक्षं चन्द्रस्य वास्तोश्च पुरः पृष्ठे च नो शुभम् ॥ ११२ ॥

गृह पिण्ड द्वारा जो नक्षत्र आवै और चन्द्र नक्षत्र जो हो ये दोनों नक्षत्र ( कृत्तिकादि सात २ नक्षत्र पूर्वादि दिशाओं के क्रमसे सप्तशलाका चक्र के तरह देने से ) यदि वाम वा दक्षिण हो तो शुभ होता है । और आगे पीछे अशुभ होता है । यही प्रकार भृगु का भी है--जैसे सप्तशलाका चक्र में कृत्तिका से सात २ नक्षत्र पूर्वादि चारो दिशाओं में दिये जाते हैं वैसाही यहां भी देना और वास्तु चन्द्रमा का नक्षत्र यदि आगे वा पीछे हो तो शुभ नहीं होता है ॥११२॥

प्रारम्भकाले यदि मन्दभौमौ लाभाश्रितौ देवगुरुश्चतुर्थे ।
चन्द्रोदये चेच्छरदामशीतिः स्थितिर्नियुक्ता भवनस्यसद्भिः ११३

गृहारम्भ के समय यदि शनि मङ्गल एकादश वृहस्पति चतुर्थ और चन्द्रमा दशम हो तो उस गृह का आयु ८० वर्ष होता है ॥ ११३ ॥

लग्नं कर्कटमाश्रिते हिमकरे देवार्चिते केन्द्रगे
लक्ष्मीवद्भवनं खगैश्च सुहृदः स्वांशोच्चभागैस्तथा ।
नीचांशैरपि निर्धनं तु खचरो ह्येकः परांशास्थितः
यामित्रे दशमेऽब्दमध्यत इदं गेहं परैर्नीयते ॥११४॥

कर्क लग्न में चन्द्रमा और केन्द्र में वृहस्पति हो अवशिष्ट ग्रह अपने मित्र या उच्च के अंश में हों तो गृह लक्ष्मीयुक्त होता है । यदि ग्रह नीच में हो तो निर्धनता होती है तथा एक ग्रहभी दशम या सप्तम में होकर शत्रु के अंश में हो तो वह गृह एक वर्ष के भीतरही दूसरेके हाथ में चला जाता है ॥ ११४ ॥

भृगुर्विलग्नेयदिमीनसंस्थः
कर्केगुरुस्तुर्यगृहं गतश्चेत् ।
शनिस्तथैकादशगस्तुलायां
गेहं चिरं श्रीसहितं तदा स्यात् ॥ ११५ ॥

यदि मीन में होकर शुक्र लग्न में हो या कर्कका वृहस्पति चतुर्थ में हो अथवा तुला का शनि एकादश हो तो वह गृह सदैव धनयुक्त रहता है ॥११५॥

॥ इति योगजः ॥

अथ वास्तुचक्रम्—

सूर्यभाद्गणयेद्वास्तुचक्रं च दिनभावधि ।
अश्व-रुद्र-दशर्क्षञ्च ह्यशुभं शुभदं क्रमात् ॥११६॥

वास्तु चक्र में सूर्य नक्षत्र से दिन नक्षत्र तक गणना करना उसमें पहले ७ नक्षत्र अशुभ वाद ११ नक्षत्र शुभ उसके वाद १० नक्षत्र तक अशुभ होता है ॥११६॥

अथ तत्रैव वृषभचक्रम् राजमार्त्तण्डे—

वृषचक्रं वृषाकारं सर्वावयव संयुतम् ।
यस्मिन्-ऋक्षेस्थितो भानुस्तत्रादौ त्रीणिमस्तके ॥११७॥
अग्रपादे च चत्वारि पुनश्चत्वारि पश्चिमे ।
पृष्ठे त्रीणि च धिष्ण्यानि कुक्षौ चत्वारि दक्षिणे ॥११८॥
पुच्छेत्रीणि च धिष्ण्यानि कुक्षौ चत्वारि वामके ।
मुखेत्रीणि च धिष्ण्यानि अष्टाविंशति तारकाः ॥ ११९ ॥

वृष ( वैल ) के आकार का वृषभ चक्र सभी अङ्गों से युक्त वनाना इसके बाद जिस नक्षत्र पर सूर्य हों उससे तीन नक्षत्र उसके सिर पर देना उसके वाद ४ नक्षत्र अगले पाद में, वाद इसके ४ नक्षत्र पिछले पाद में, इसके वाद ३ नक्षत्र पृष्ठ पर, वाद ४ नक्षत्र दक्षिण कुक्षि पर, वाद ३ नक्षत्र पुच्छपर, इसके वाद ४ नक्षत्र वाम कुक्षिपर, वाद ३ नक्षत्र मुखमें देने से यह २८ नक्षत्र होते हैं॥११७-११९॥

फलमपि तत्रैव—

शिरसा वज्रपातः स्यादुद्वेगश्चाग्र पादयोः ।
स्थिरत्वं पश्चिमे पादे पृष्ठे चैव धनागमः ॥ १२० ॥

दक्ष कुक्षौ जयोलाभः पुच्छेस्वामि विनाशनम् ।
वाम कुक्षौ च दारिद्र्यं मुखे पीडानिरन्तरम् ॥ १२१ ॥

सूर्यभात्तुत्यजेत्सप्त ततश्चैकादशे धनम् ।
ततोऽन्यभेषु दुष्टंस्यादितिवास्तुनिकीर्तनम् ॥ १२२ ॥

शिरके नक्षत्र में गृहारंभ करने से वज्रपात अगले पाद में उद्वेग पिछले पाद में स्थिरता पृष्ठ में धनागम दक्षिण कुक्षि में जयलाभ पुच्छ में स्वामिनाश वामकुक्षि में दरिद्र मुखके नक्षत्र में निरन्तर पीड़ा इसी तरह सूर्य के नक्षत्र से ७ नक्षत्र अशुभ बाद ११ में धन इसके बाद सब नक्षत्रों में वास्तु कृत्य दुष्ट होता है इसी आशय को लेकर मुहूर्त्तचिन्तामणि में रामदैवज्ञ ने भी लिखा है ।

तथा च तद्वाक्यम्—

गेहाद्यारम्भेऽर्कभाद्वत्सशीर्षे रामैर्दाहोवेदभैरग्रपादे ।
शून्यं वेदैः पृष्ठपादे स्थिरत्वं रामैः पृष्ठे श्रीयुगैर्दक्ष कुक्षौ ॥
लाभो रामैः पुच्छगैः स्वामिनाशो वेदैर्नैःस्व्यं वामकुक्षौ मुखस्थैः ।
रामैः पीडा सन्ततं चार्कधिष्ण्याद्दश्चैरुद्गैर्दिग्भिरुक्तं ह्यसत् सत् ॥

अथवास्तु पुरुषस्य कुत्रस्थलेस्थितिरिति निर्णयः—

सवेदास्तिथयोद्विघ्ना नामाक्षर समन्विता ।
त्रिभिश्चैवहरेद्भागं शेषः पुरुष उच्यते ॥ १२३ ॥

एके च वसते स्वर्गे द्वाभ्यां पातालमेव च ।
शून्ये तु मृत्युलोके स्यादितिपाराशरोऽब्रवीत् ॥१२४॥

स्वर्गेवासे भवेल्लाभः पातालेषु श्रियः सदा ।
मृत्युलोके भवेन्मृत्युर्विचिन्त्य गृहमारभेत् ॥ १२५ ॥

तिथिमें ४ मिलाकर उसको दूना करना उसमें नामाक्षर जोड़ कर ३ का भाग देना १ शेष में स्वर्ग २ में पाताल और शून्य शेष में मर्त्यलोक में वास्तु पुरुष का वास कहना चाहिये यह पाराशर का कथन है । स्वर्ग में लाभ पाताल में निरन्तर लक्ष्मी प्राप्ति और मृत्यु लोक में वास्तु पुरुष के रहने से मृत्यु होता है इन बातों को विचार कर गृहारम्भ करना चाहिये ॥

शिल्पशास्त्रेऽपि—

वास्तोः शिरसि पुच्छे च याम्यकुक्षौ च पृष्ठतः ।
आयुः कामःखनेन्नैव वामकुक्षौ खनिः शुभा ॥१२६॥

वास्तु पुरुषके शिर पुच्छ याम्यकुक्षि और पृष्ठभाग में आयुः कामना वाले पुरुष खात न दें अतः वाम कुक्षि में खात शुभ होता है ॥ १२६ ॥

तत्रैव लल्लः—

त्यजेद्दशशिरोभागे ह्यग्रे सप्तदशांशकान् ।
मध्येनाभिंविजानीयात्तत्रशङ्कुं निवेशयेत् ॥ १२७ ॥
अस्थिरस्य शिरो यत्र वास्तोस्तद्गणयेत्करैः ।
दैर्घ्यं वा विस्तृतिंचैव कृत्वाष्टाश्विमितांशकान् ॥१२८॥

वास्तु पुरुष के अंगमें २८ भाग करके शिरके तरफ दसभाग और पुच्छके तरफ १७ भाग परित्याग करके मध्य याने अवशिष्ट भागमें शंकुन्यास करना चाहिये । इसी वाक्यको पुष्ट करनेवाला दूसरा श्लोक है ॥ १२७-१२८ ॥

अथ कूर्मचक्रम्-ज्योतिः प्रकाशे—

तिथिस्तु पञ्चगुणिता कृत्तिकाद्यर्क्षसंयुता ।
तथा द्वादशमिश्रा च नवमाङ्केन भाजिता ॥१२९॥
जले वेदामुनिश्चन्द्रस्थले पञ्चद्वयं वसु ।
त्रिषष्ठनवचाकाशे त्रिविधं कूर्मलक्षणम् ॥१३०॥
जले लाभस्तथा प्रोक्तः स्थले हानिस्तथैव च ।
आकाशेमरणं प्रोक्तमिदं कूर्मस्यचक्रकम् ॥१३१॥

तिथी को ५ से गुणाकर कृत्तिकादि नक्षत्र संख्या को जोड़ देना उसमें १२ और मिलाना और नवका भाग देना । यदि ४, ७, १, शेष बचे तो जलमें, ५, २, ८ शेष बचे तो स्थलमें, ३, ६, ९, शेष बचे तो आकाश में कूर्मवास करता है । जलमें रहने से लाभ, स्थल में हानि, और आकाश में कूर्म के रहने से मरण होता है यही कूर्म चक्र है ॥ १२९-१३१ ॥

अथ शङ्कु लक्षणम्—

स्याच्चतुर्विंश विंशाष्टि द्वादशङ्गुलकैः क्रमात् ।
विप्रादीनां शङ्कुमानं स्वर्णवस्त्राद्यलंकृतम् ॥१३२॥
खदिरार्जुन शालोत्थयुगपत्रतरुद्भवम् ।
रक्तचन्दन पालाश रक्तशाल विशालजम् ॥१३३॥

निम्ब कारञ्ज कुटजं वैष्णवं विल्ववृक्षजम् ।
शङ्कुं त्रिधाविभज्यादौ चतुरस्रं ततः परम् ॥१३४॥
अष्टास्रं च तृतीयांशमजस्रमृज्ववर्णकम् ।
एवं लक्षणसंयुतं परिकल्प्यं शुभेदिने ॥१३५॥

ब्रह्मणादि वर्णों के क्रम से २४, २०, १६, और १२ अंगुल का शंकु बनाकर उसको सुवर्ण वस्त्रादि से भूषित करना चाहिये, और शंकु भी खदिर, अर्जुन शालवृक्ष, निम्ब, करंज, कुटज, और विल्व वृक्ष का होना चाहिये। शंकुमें तीन भाग करके चार कोण, आठ कोण अथवा गोला या सीधा इन इन लक्षणों से युक्त शुभ दिनमें शंकु निर्माण करना चाहिये ॥ १३२–१३५ ॥

अथ मण्डलेशानयनम्—

स्वामि हस्त प्रमाणेन दीर्घविस्तार संयुतम् ।
द्विगुणं चाष्टभिर्भक्तं मण्डलाधिप उच्यते ॥१३६॥
इन्द्रो विष्णुर्यमोवायुः कुवेरो धूर्जटिस्तथा ।
विधाता विघ्नराजश्च मण्डलेशाः प्रकीर्तिताः ॥१३७॥
इन्द्रः सौख्यं यशोविष्णुर्यमोदुःखं निरन्तरम् ।
वायुरुत्पाटनं चैव कुवेरो धनदस्तथा ॥१३८॥
धूर्जटिः कलहोनित्यं धाता सौख्य प्रवृद्धिदम् ।
सर्वसिद्धिं गणाधीशः फलमुक्तं विचक्षणैः ॥१३९॥

गृहकर्त्ता के हाथसे दीर्घ विस्तार के मान को आपस में गुणा कर उसको २ से गुण देना और आठ का भाग देना शेष तुल्य मण्डलेश होंगें यथा १ शेषमें इन्द्र, २ में विष्णु, ३ में यम, ४ में वायु, ५ में कुवेर, ६ में धूर्जटि (शिव) ७ में ब्रह्मा, ८ में गणेश, मण्डलेश होंगे। इन्द्रमें सौख्य, विष्णु में यश, यम में निरन्तर दुःख, वायु में उत्पाटन, कुवेर में धनलाभ, शिवमें कलह, ब्रह्मामें सौख्य-वृद्धि, और गणेशमें सर्व सिद्धि होती है ॥ १३६–१३९ ॥

अथ गृहात्प्रतीच्यां दक्षिणस्यां वा आयादिशुद्धं गृहं नविधेयमित्यत्र माण्डव्यः—

वास्तुक्षेत्रादवाक्प्रत्यग्दिशिनैव गृहं रचेत् ।
उत्तरस्यान्तु पूर्वस्यां गृहात्सर्वं गृहं रचेत् ॥१४०॥

सद्मोच्चाद्द्विगुणाधिकान्तरभुवि प्रत्यक् तथा दक्षिणे ।
गेहं चाशुरचेच्छुभायभवनं सत्कर्मणांसिद्धये ॥
माण्डव्यादि मुनीन्द्रगर्ग प्रभवा एवं वदन्तीति च ।
संशोध्यैव गृहं रचेच्चसुधिया भव्यादि कर्माखिले ॥१४१॥

पहले के गृह से दक्षिण और पश्चिम दिशा में गृह नहीं बनाना, उत्तर और पूर्व में ही गृह बना सकते हैं यदि दक्षिण पश्चिम बनाना भी हो तो गृह का जितना ऊँचाई हो उससे दूना पश्चिम दक्षिण हट कर घर बना सकते हैं यही वचन माण्डव्यादि मुनिगण और गर्गादि ऋषियों का है, इस रूप से संशोधन करके जो गृह बनाते हैं उनका सभी कार्य कल्याणमय होता है ॥१४०-१४१॥

अथाजिराऽनयनम्—

दीर्घविस्तार संख्यैक्ये चन्द्रैश्चगुणिते तथा ।
नवभिस्तुहरेद्भागं शेषमाजिरमुच्यते ॥ १४२ ॥

फलञ्च—

दाता विचक्षणोभीरुः कलहो नृपदानवौ ।
क्लीवश्चौरोधनी चेति नामतुल्यंफलं स्मृतम् ॥१४३॥

दीर्घ विस्तार को गुणाकर नव का भाग देना शेष तुल्य अङ्गण के फल होते हैं यथा १ में दाता, २ में विचक्षण, ३ में भीरु ४ में कलह, ५ में नृप, ६ में दानव, ७ में क्लीव, ८ में चोर और ९ में धनी इसका फल नाम सदृश होता है ॥ १४२-१४३ ॥

प्रकारान्तरेणफलम्

तस्कर भोग विचक्षण दाता नृपति नपुंसक धनदश्च ।
दरिद्रभयदाताह्येते कथिता नवभक्तफलं सौम्यैः ॥१४४॥

इसका अर्थ स्पष्ट ही है ॥ १४४ ॥

अथ राशिपरत्वेनद्वारनिर्णयः—

पूर्वे ब्राह्मणराशीनां वैश्यानां दक्षिणे शुभम् ।
शूद्राणां पश्चिमेद्वारं नृपाणामुत्तरेमतम् ॥१४५॥

ब्राह्मण राशि के लिये पूर्वद्वार वैश्य राशि के लिये दक्षिण द्वार शूद्र राशि के लिये पश्चिम द्वार और क्षत्रिय राशि के लिये उत्तर द्वार शुभ है ॥ १४५ ॥

अथ द्वारनिर्माणार्थं महेश्वरः—

सर्वद्वारइहध्वजोवरुणदिग्द्वारं च हित्वा हरिः ।
प्राग्द्वारो वृषभो गजो यम सुरेशाशामुखः स्याच्छुभः॥१४६॥

ध्वज आय को सर्व दिक्द्वार शुभ होता है, सिंह को पश्चिम द्वार छोड़ कर अवशिष्ट शुभ है, एवं वृष आय को पूर्व गज को दक्षिण और पूर्व शुभ होता है, इसी मत के आधार पर रामदैवज्ञ ने भी लिखा है—यथा "ध्वजादिकाः सर्वदिशिध्वजे मुखं कार्यं हरौ पूर्व यमोत्तरे तथा ॥ प्राच्यां वृषे प्राग्यमयोर्गजेऽथवा पश्चादुदक् पूर्व यमे द्विजादितः" ॥ १४६ ॥

अथ वर्णायपरत्वेन द्वारनिर्णयः—

ध्वजे प्रतीच्यां मुखमग्रजाना—
मुदङ्मुखं भूमिभृतां च सिंहे ।
विशोवृषे प्राग्वदनं गजेतु
शूद्रस्य याम्यां हि समामनन्ति ॥१४७॥

ध्वज आय और ब्राह्मण वर्ण को प्रतीचि ( पश्चिम ) मुख, क्षत्रिय वर्ण सिंह आय को उत्तर मुख, वैश्य वर्ण वृष आय को पूर्व मुख और गज आय शूद्र जाति को दक्षिण मुख द्वार शुभ होता है ॥ १५५ ॥

यथा च्यवनः—

ध्वजे परास्यं विप्राणां राज्ञां सिंहेऽप्युदङ्मुखम् ।
गजे शूद्रस्य याम्यास्यं विशःपूर्वामुखं वृषे ॥

अथ भित्तिप्रसङ्गेनद्वारमाह—मार्त्तण्डे—

पूर्वादौ त्रिषडर्थपञ्चमलवेद्वाः सव्यतोङ्कोद्धृते ।
दैर्घ्येद्व्यंश समुच्छ्रिताऽधिलवके सर्वासुदिक्षूदिता ॥

गृह दैर्घ्य* में नव भाग करके पूर्वाभिमुख द्वार करना हो तो वाम भाग से दो भाग छोड़ कर तीसरे चौथे अंश में, दक्षिणाभिमुख द्वार करना हो तो पांच भाग छोड़ कर चौथे छठे भाग में, पश्चिमाभिमुख द्वार करना हो तो चौथे पांचवें भाग में और उत्तराभिमुख द्वार करना हो तो चौथे पांचवे भाग में ही द्वार ( दरवाजा ) शुभ है, और द्वारों को दो भाग ऊँचा करना चाहिये, एतदनुसार ही वाराहमिहिर का वाक्य है यथा—

* यहां दीर्घ शब्द से दीर्घ, विस्तार दोनों का ग्रहण है ।

दैर्घ्ये नवांशात्पदमत्रसव्याद्द्वारंशुभंप्राकृत्रिचतुर्थ भागे ।
चतुर्थषष्ठेदिशिदक्षिणस्यां पश्चाच्चतुःपञ्चमके तथोदक् ॥

इसमें भी उपर्युक्त रीति के अनुसार दीर्घ विस्तार में ही द्वार करना चाहिये कोण में द्वार करना अनिष्टद होता है लिखा भी है—

द्वारमायामतः कार्यं पुत्रपौत्रधनप्रदम् ।
विस्तारकोणंद्वारं यद्दुःखशोकभयप्रदम् ॥

विश्वकर्मा प्रकाश में भी भित्ति के मध्य ( उपरि ) भाग में द्वार करना निषेध है यथा—

भित्तिमध्ये कृतंद्वारंद्रव्यधान्यविनाशनम् ।
आवहेत् कलहं शोकं नारीर्वा संप्रदूषयेत् ॥

एवं द्वार के उपर द्वार या सामने द्वार करना भी निषेध है, यथा—

द्वारस्योपरियद्द्वारं द्वारं द्वारस्यसम्मुखम् ।
नकार्यं व्ययदंयच्च संकटं तद्दरिद्रकृत् ॥

एवं भित्ति मध्य के शिरा आदि प्रदेशों में भी द्वार करना सर्वदा ही निषेध है। यथा—

शिरा मर्माणि वंशाश्च नालमध्यं च सर्वशः ।
विहाय वास्तुमध्यं च द्वाराणि विनिवेशयेत् ॥ १४८॥

अथ द्वारस्य वेध फलमाह—वाराहमिहिरः ।

मार्ग तरु कोण कूप स्तम्भ भ्रम विद्धमशुभदं द्वारम् ।
उच्छ्रायाद्द्विगुणमितां त्यक्त्वा भूमिं न दोषाय ॥१४९॥

मार्ग ( रास्ता ) वृक्ष, कोण, कूप, स्तम्भ, भ्रम ( चक्र ) से वेधित द्वार अशुभ होता है, पर द्वार के उंचाई से द्विगुण तुल्य दूरी पर ये सब हों तो दोष नहीं है ॥ १४७-१४९ ॥

अत्रैव विशेषफलान्याह—

रथ्या विद्धं द्वारं नाशाय कुमारदोषदं तरुणा ।
पङ्कद्वारे शोकोव्ययोऽम्बुनिःस्राविणिप्रोक्तः ॥१५०॥
कूपेनापस्मारो भवति विनाशश्च देवताविद्धे ।
स्तम्भेन स्त्रीदोषाः कुलनाशो ब्राह्मणाभिमुखे ॥१५१॥

मार्ग (रास्ता) से वेधित द्वार गृहस्वामि को नाश करता है। वृक्ष वेधित गृहद्वार बालकों को दोषद होता है। पङ्कविद्ध ( जिसके द्वार पर निरन्तर पङ्क रहे ) द्वार शोक करता है, जलनिर्गम मार्ग से वेधित द्वार धनव्यय करता है। कूप से वेधित द्वार अपस्मार रोग देता है। देवमूर्ति से वेधित विनाश करता है, स्तम्भ विद्ध द्वार स्त्री को दुःशील बनाता है। ब्राह्मण से वेधित द्वार कुल नाश करता है ॥ १५०-१५१ ॥

अथान्यद्द्वारस्य विशेषमाह—

उन्मादः स्वयमुद्घाटितेऽथपिहिते स्वयं कुलविनाशः ।
मानाधिके नृपभयं दस्युभयं व्यसनमेव नीचे च ॥१५२॥

द्वारं द्वारस्योपरि यत्तन्न शिवाय शङ्कटं यच्च ।
आव्यात्तं क्षुद्भयदं कुब्जं कुलनाशनं भवति ॥१५३॥

पीड़ाकरमतिपीडितमन्तर्विनतं भवेदभावाय ।
बाह्यविनते प्रवासो दिग्भ्रान्ते दस्युभिः पीड़ा ॥१५४॥

दरवाजे का कपाट यदि स्वयं खुलता हो तो उन्माद करता है, यदि स्वयं बन्द होजाता हो तो कुल का नाश करता है, प्रमाण से अधिक हो तो राजभय, प्रमाण से कम हो तो चौरभय और व्यसन ( दुःख ) होता है। द्वार के ऊपर जो द्वार हो तो कल्याणकारक नहीं होता है।

और जो कपाट मोटाई में अल्प हो वह भी अच्छा नहीं होता जो बहुत मोटा हो वह क्षुधा का भय करता है यदि टेढा होतो कुल का नाश करता है। उदुम्बर लगा होतो गृह स्वामि को पीड़ा देता है, गृह के भीतर नम्र हो तो गृहस्वामि को मरण करता है, यदि बाहर नत हो तो अन्य देश में वास कराता है यदि दुसरे दिशा में नम्र हो तो चौर पीड़ा करता है ॥

अत्रैव विशेषमाह

मूलद्वारं नान्यैर्द्वारैरभिसन्दधीत रूपर्द्ध्या ।
घटफलपत्रप्रमथादिभिश्च तन्मङ्गलैश्चिनुयात् ॥१५५॥

मूल ( प्रधान ) द्वार की रचना जैसी की गई हो वैसी अन्य द्वारों को नहीं बनाना चाहिये, मूल द्वार को ही घट ( कलश ) फल ( श्रीफल ) पत्र ( लतादि ) एवं सिंहादि चित्रों से चित्रित करना चाहिये ॥

तथान्यः—

पृष्ठतः पार्श्वयोर्वापि न वेधं चिन्तयेद्बुधः।
प्रासादे वा गृहेवापि वेधमग्रे विनिर्दिशेत् ॥ १५६ ॥
प्रथमान्त्ययामवर्ज्यं द्वित्रिप्रहर संभवा।
छायावृत्तद्वयादीनां सदा दुःख प्रदायिनी ॥ १५७ ॥

पृष्ठ और पार्श्व भागमें वेध नहीं होता (प्रासाद या गृह में) एवं द्वयादि-वृक्षों की छाया प्रथम और अन्त्य प्रहर को त्याग कर द्वितीय और तृतीय प्रहर में दुःखद होती हैं ॥ १५६-१५७ ॥

नवभागं गृहंकृत्वा पञ्चभागं तु दक्षिणे।
त्रिभागमुत्तरे कार्यं शेषं द्वारं प्रकीर्तितम् ॥ १५८ ॥

गृह के जिस भाग में द्वार करना हो उस भाग में नव भाग कर देना चाहिये। उसमें पांच भाग दक्षिण और तीन भाग उत्तर को छोड़ कर अवशिष्ट भाग में द्वार करना चाहिये। यहां वाम दक्षिण भाग मकान से निकलते समय का लेना चाहिये। जैसा कि वास्तुरत्नावली में लिखा है—

दक्षिणाङ्गः स वै प्रोक्तो मन्दिरान्निःसृते सति।
यो भूयाद्दक्षिणे भागे वामे भूयात्स वामग इति ॥ १५८ ॥

अथ बृहत्संहितायां यानि चतसृषु दिक्षु द्वात्रिंशद्द्वाराण्युक्तानि तेषां शुभाशुभफलमाह—

अनिलभयं स्त्रीजननं प्रभूतधनता नरेन्द्रवाल्लभ्यम्।
क्रोधपरतानृतत्वं क्रौर्यं चौर्यञ्च पूर्वेण ॥ १५९ ॥

गृह भित्ति में नव विभाग करने से एक एक भित्ति में आठ आठ द्वार (दरवाजे) होते हैं, यों सब ३२ दरवाजे हुए। उसमें भी पूर्व भाग में जो आठ दरवाजे हैं उसका नाम और फल यों है। पहले का नाम शिखि है, उसमें द्वार करने से वायु का भय होता है, दूसरे का नाम पर्जन्य है उसमें कन्या जन्म होता है, तीसरे का नाम जयन्त है उसमें द्वार करने से धन की अधिकता, चौथे का नाम इन्द्र है उसमें राजप्रियता, पांचवें का नाम सूर्य है उसमें क्रोध की अधिकता, छठें का नाम सत्य है उसमें असत्यता, सातवें का नाम भृश है उसमें क्रूरता और आठवेंका नाम अन्तरिक्ष है उसमें द्वार करने से चोरी होती है ॥ १५९

अथ दक्षिण आह—

अल्प सुतत्वं प्रैष्यं नीचत्वं भक्ष्यपानसुतवृद्धिः ।
रौद्रं कृतघ्नमधनं सुतवीर्यघ्नं च याम्येन ॥ १६० ॥

एवं दक्षिण दिशा में पहला भाग का नाम अनिल है उसमें द्वार करने से पुत्र की कमी, दूसरे भाग का नाम पौष्ण है उसमें दास वृत्ति, तीसरे भाग का नाम वितथ है उसमें नीचता, चौथेका नाम बृहत्क्षत है उसमें भक्ष्यपान और पुत्र वृद्धि, पांचवें का नाम याम्य है उसमें अशुभ, छठें का नाम गन्धर्व है उसमें कृतघ्न, सातवें का नाम भृङ्गराज है उसमें धन हीनता और आठवें का नाम मृग है उसमें द्वार करने से पुत्र और बल का नाश होता है ॥ १६० ॥

अथ पश्चिम आह—

सुतपीड़ारिपुवृद्धिर्नसुतधनाप्तिः सुतार्थफलसम्पत ।
धनसम्पन्नृपतिभयं धनक्षयो रोग इत्यपरे ॥ १६१ ॥

एवं पश्चिम दिशामें पहला भाग का नाम पितृ है उसमें पुत्र व्यथा । दुसरे का नाम दौवारिक है उसमें शत्रु वृद्धि तीसरे का नाम सुग्रीव है उसमें पुत्र धन की अप्राप्ति, चौथे का नाम कुसुमदन्त है उसमें पुत्र धन फल की संपत्ति, पांचवें भाग का नाम वरुण है उसमें धन संपत्ति, छठें भाग का नाम असुर है उसमें राजभय, सातवें भाग का नाम शोष है उसमें धननाश और आठवें भाग का नाम पापयक्ष्मा है उसमें द्वार करने से रोग का भय होता है ॥ १६१ ॥

अथोत्तर आह—

वधवन्धो रिपुवृद्धिः सुतधनलाभः समस्तगुण सम्पत् ।
पुत्रधनाप्तिर्वैरं सुतेन दोषाः स्त्रिया नैःस्वम् ॥१६२॥

एवं उत्तर भाग के प्रथम हिस्से का नाम रोग है उसमें वधवन्धन, दूसरे भाग का नाम सार्प है उसमें रिपुवृद्धि, तीसरे भाग का नाम मुख्य है उसमें पुत्र धन का लाभ, चौथे भाग का नाम भल्लाट है उसमें सम्पूर्ण गुण और सम्पत्ति का लाभ, पांचवें भाग का नाम सौम्य है उसमें पुत्र धन लाभ, छठें भाग का नाम भौजंग है उसमें पुत्र के साथ वैर, सातवें भाग का नाम आदित्य है उसमें स्त्रीजन्य दोष और आठवें भाग का नाम दिति है उसमें द्वार करने से निर्धनता होती है १६२ ॥

पूर्व वाक्यों को स्पष्ट करने के लिये ये वचन हैं यथा—

पूर्वाण्यैशान्यां याम्याग्नेय्यांदक्षिणानिजानीयात् ।
द्वाराणि नैर्ऋताात् पश्चिमान्युदकूस्थानिवायव्याम् ॥

आग्नेयमग्निभयदं पार्जन्यंस्त्रीप्रसूतिदं द्वारम्।
प्रचुर धनदं जयन्तं नृपवल्लभकारि माहेन्द्रम्॥
शौर्यक्रोधः प्रचुरः सत्येऽनृतवादितं भृशेक्रौर्यम्।
चौर्यं तथान्तरिक्षे प्राग्द्वाराणि प्रदिष्टानि॥
वायव्येऽल्पसुतत्वं प्रैष्यं पौष्णेऽथनीचता वितथे।
वह्नन्नपानपुत्रं बृहत्क्षते याम्य अपि रौद्रम्॥
गान्धर्वे गन्धत्वं नृपचौर्यभयाय भृङ्गराजाख्यम्।
मृगमपि सुतवीर्यघ्नं दक्षिणतो द्वारनिर्देशः।
पित्र्ये शरीरपीड़ा दौवारिक संज्ञिते च रिपु वृद्धिः॥
सुग्रीवे धनहानिः पुत्रधनाढ्यं कुसुमदन्तम्।
वारुणमर्थं निचयदं नृपभयदं चासुरं विनिर्दिष्टम्॥
शोषं धन हानिकरं वहुरोगंपापयक्ष्माख्यम्।
रोगसुखंवधबन्धदमात्मज वैराभिवृद्धिदं नागम्॥
मुख्यं धन सुत वृद्धिदमनेक कल्याणदंच भल्लाटम्।
सौख्यं धन पुत्र करं भौजङ्गे पुत्र वैर रिपु वृद्धिः॥
अदितौ स्त्री दोषाः स्युर्दितौ धनं संक्षयं याति।

इन श्लोकों का अर्थ उपर्युक्त अर्थों से ही स्पष्ट है॥

अथद्वारचक्रम् तत्ररामः—

**सूर्यर्क्षाद्युगभैः शिरस्यथ फलं लक्ष्मीस्ततः कोणभै-**
**र्नागैरुद्वसनं ततो गजमितैः शाखासु सौख्यं भवेत्।**
**देहल्यां गुणभैर्मृतिर्गृहपतेर्मध्यस्थितैर्वेदभैः**
**सौख्यं चक्रमिदं विलोक्य सुधिया द्वारं विधेयं शुभम्॥१६३॥**

द्वार चक्र में सूर्य नक्षत्र से देहली के शिर पर ४ नक्षत्र दिया जाय तो उसमें द्वार करने से लक्ष्मी प्राप्ति होती है, उसके बाद ८ नक्षत्र कोण में दिया उसका फल उद्वास है, उसके वाद ८ नक्षत्र शाखा में दिया उसका फल सौख्य है, उसके बाद ३ नक्षत्र देहली में देने से उसका फल गृहपति का मृत्यु होता है। उसके वाद ४ नक्षत्र मध्य में देना उसमें द्वार करने से सौख्य होता है अर्थात् (सूर्य नक्षत्र से ४ नक्षत्र शुभ, वाद उसके ८ अशुभ, इसके वाद ८ शुभ वाद ३ नक्षत्र अशुभ वाद ४ नक्षत्र शुभ होता है) इस चक्र को देख कर बुद्धिमान् जन द्वार निर्माण करें तो शुभ होता है॥ १६३॥

यथोक्तम्—

सूर्यर्क्षाद्युगनागाष्ट गुणवेदैः शुभाशुभम्।
शिरः कोणद्वारशाखा देहली मध्यगैः क्रमात्॥

इसके अनुसार ही ज्योतिर्निवन्ध में भी वाक्य हैं यथा—

द्वारचक्रं प्रवक्ष्यामि भाषितं विश्वकर्मणा ।
सूर्यभाद्वंचतुष्कं तु शिरस्योपरि विन्यसेत् ॥
द्वे द्वे कोणे प्रदातव्ये शाखायुग्मे द्वयंद्वयम् ।
अधश्च त्रीणि देयानि वेदामध्ये प्रतिष्ठिताः ॥
राज्यं स्यादूर्ध्वनक्षत्रे कोणेषूद्वासनं भवेत् ।
शाखायां लभते लक्ष्मीमधश्चैव मृतिं लभेत् ॥
मध्यभेषु लभेत्सौख्यं चिन्तनीयं सदा बुधैः ॥

तथाचान्यः—

दिनकर किरणाक्रान्तर्क्षतोद्वारचक्रे युगयुगयमवेद द्विद्वि वेदद्विरामैः
मितमुडुगण भागं विन्यसेदूर्ध्वतोन्तर्नियममखिलदिग्गं नाप्यधः कोणभंसत्

अथद्वारस्थापनम्—

द्वारस्थापन नक्षत्राण्युच्यन्तेऽश्विनिचोत्तराः ।
स्वातौ पूष्णि च रोहिण्यां द्वारशाखावरोपणम् ॥१६४॥

अश्विनी, उत्तरा ३, स्वाती, रेवती, रोहिणी ( मतान्तर से हस्त, पुष्य, श्रवण, मृगशिरा ) ये नक्षत्र द्वार के लिये शुभ है ॥ १६४ ॥

तथैव तिथयोऽपि--

पञ्चमी धनदा चैव मुनि नन्द वसौ शुभम् ।
प्रतिपत्सु न कर्तव्यं कृते दुःखमवाप्नुयात् ॥१६५॥
द्वितीयायां द्रव्यहानिः पशु पुत्र विनाशनम् ।
तृतीया रोगदा ज्ञेया चतुर्थी भङ्ग कारिणी ॥१६६॥
कुलक्षयं तथा षष्ठी दशमी धन नाशिनी ।
विरोध कृदमापूर्णा नस्याच्छाखावरोपणम् ॥ १६७ ॥

तिथियों का फल यों है पञ्चमी में द्वार करने से धन लाभ, सप्तमी, अष्टमी और नवमी शुभ है । प्रतिपद् में द्वार नहीं करना चाहिये, करने से दुःख होता है । तृतीया में रोग, चतुर्थी में भङ्ग होता है, षष्ठी में कुलनाश, एवं दशमी में धननाश होता है, अमावास्या, पूर्णिमा विरोध करती है । अतः अनिष्ट तिथियों में द्वारशाखावरोपण नहीं करना चाहिये । ॥ १६५–१६७ ॥

तथान्यो मुहूर्त्तमुक्तावल्याम्

भवेत्पूष्णी मैत्रेच पुष्येच शाक्रे
करेदस्रचित्रानिलौचादितौ च ।
गुरुश्चन्द्रशुक्रार्कसौम्येच वारे
तिथौनन्दपूर्णाजयाद्वारशाखा ॥ १६८ ॥

रेवती, अनुराधा, पुष्य, ज्येष्ठा, हस्त, अश्विनी, चित्रा, स्वाती और पुनर्वसु नक्षत्र गुरु, सोम, शुक्र, रवि और बुधवार तथा नन्दा, पूर्णा और जया तिथि द्वार कार्य में शुभ होता है ॥ १६८ ॥

अथ गुरुः

ध्रुवभे शुभवारे च स्थिरेलग्ने शुभेदिने ।
द्वारं स्थाप्यं मृगं चित्रं वर्गसम्पद्विवर्द्धनम् ॥१६९॥
चरे स्थिरे च नक्षत्रे बुध शुक्रदिने तिथौ ।
शुभे कपाट योगः स्याद्द्विस्वभावोदयेगृहे ॥१७०॥

गुरु के वचनानुसार ध्रुव ( उ० ३ रो० ) नक्षत्र शुभ वार स्थिर लग्न शुभ तिथि में द्वार शुभ होता है। तथा मृगशिरा और चित्रा कुल सम्पत्ति को बढ़ाने वाला है, तथा चरस्थिर नक्षत्र बुध, शुक्र का वार और शुभ तिथि तथा द्विस्वभाव लग्न में कपाट लगाना शुभ होता है ॥ १६९-१७० ॥

तथाह माण्डव्यः

सूत्र शङ्कु शिला द्वार तुलाच्छदन पूर्वकम् ।
कार्यस्तम्भप्रतिष्ठोक्ते धिष्ण्ये वार तिथौ तथा ॥१७१॥

सूत्र, शङ्कु, शिलान्यास, द्वारकार्य, गृहच्छादन इत्यादि स्तंभ प्रतिष्ठा के कहे हुये नक्षत्र, वार और तिथियों में शुभ होता है।

अथ नृपादि ब्राह्मणान्तानां सर्वेषां पञ्च पञ्च गृहाणि प्रत्येकस्य वक्ष्यति तत्रादौ नृपगृहाणां प्रमाणमाह—

उत्तममष्टाभ्यधिकं हस्तशतं नृपगृहं पृथुत्वेन ।
अष्टाष्टोनान्येवं पञ्च सपादानि दैर्घ्येण ॥१७२॥

उत्तम राजगृह में १०८ हाथ का विस्तार प्रधान होता है । इसके बाद चार गृह में आठ २ हाथ कम करके विस्तार होना चाहिये, और विस्तार से सपाद ( सवाई ) दीर्घ होना चाहिये । जैसे प्रधानगृह १०८ हाथ विस्तार और १३५ हाथ दीर्घ, एवं द्वितीयगृह १०० हाथ विस्तार, १२५ हाथ दीर्घ, तृतीयगृह का विस्तार ९२ हाथ दीर्घ ११५ हाथ, चौथा गृह का विस्तार ८४ हाथ, दीर्घ १०५ हाथ, पांचवा गृह का विस्तार ७६ हाथ और दीर्घ ९५ हाथ करना चाहिये ।

तथा च कश्यपः—अष्टोत्तरं हस्तशतं विस्तारान्नृपमन्दिरम् ।
कार्यं प्रधानमन्यानि तथाष्टाष्टोनितानि तु ॥
विस्तारं पादसंयुक्तं दैर्घ्यं तेषां प्रकल्पयेत् ।
एवं पञ्च नृपः कुर्याद्गृहाणां च पृथक् पृथक् ॥

इस रूप से पांच गृह प्रत्येक आचार्य के मत से होता है ॥ १७२ ॥

अथेदानीं सेनापतिगृहाणां प्रमाणमाह—

**षड्भिः षड्भिर्हीना सेनापतिसद्मनां चतुः षष्टिः ।**
**एवं पञ्च गृहाणि षड्भागसमन्विता दैर्घ्यम् ॥१७३॥**

सेनापति का प्रथम गृह ६४ हाथ विस्तार का बनाना बाद के चार मकानों में छः छः हाथ कम करके विस्तार रखना चाहिये और विस्तार से षष्ठांश अधिक दीर्घ होना चाहिये । यथा—

प्रथम गृह का विस्तार ६४ हाथ दीर्घ $६४+\frac{६४}{६}$ हाथ, द्वितीय गृहका विस्तार ५८ हाथ, दीर्घ $५८+\frac{५८}{६}$ हाथ, तृतीय गृह का विस्तार ५२ हाथ, दीर्घ $५२+\frac{५२}{६}$ हाथ, चौथा गृह का विस्तार ४६ हाथ, दीर्घ $४६+\frac{४६}{६}$ हाथ और पांचवा गृह का विस्तार ४० हाथ, दीर्घ $४०+\frac{४०}{६}$ हाथ होना चाहिये । यहां हाथ में ६ का पूरा २ भाग नहीं लगता, इसलिये अङ्गुलादि बनाकर ६ का भाग देना चाहिये ॥ १७३ ॥

अथ सचिवगृहाणां प्रमाणमाह—

**षष्टिश्चतुश्चतुर्भिर्हीना वेश्मानि पञ्च सचिवस्य ।**
**स्वाष्टांशयुतो दैर्घ्यं तदर्धतो राजमहिषीणाम् ॥१७४॥**

सचिव ( मन्त्री ) का गृह भी पांच बनाना चाहिये । जिसमें पहले गृह का विस्तार ६० हाथ होता है । बाद के चार मकानों में क्रमसे चार २ हाथ कम करके बनाना चाहिये । यथा दूसरा गृह का विस्तार ५६ हाथ, तीसरे का ५२ हाथ, चौथे का ४८ हाथ और पांचवे का ४४ हाथ विस्तार होना चाहिये उस विस्तार में अपना अष्टमांश जोड़कर दीर्घ कल्पना करना चाहिये । इसी प्रकार सचिव का जो गृहप्रमाण है उसके आधे दीर्घ विस्तार में राजमहिषी

( पटरानी या प्रधान स्त्री ) का गृह बनवाना चाहिये । यथा प्रथम गृह का विस्तार ३० हाथ, द्वितीय का विस्तार २८ हाथ, तृतीय का २६ हाथ, चौथे का २४ हाथ और पांचवें का विस्तार २२ हाथ होना चाहिये, और विस्तार के अष्टमांश युक्त विस्तार तुल्य दीर्घ रखना शुभ है ॥ १७२ ॥

अथ युवराजगृहाणांलक्षणमाह—

षड्भिः षड्भिश्चैवं युवराजस्यापवर्जिताऽशीतिः ।
त्र्यंशान्विता च दैर्घ्यं पञ्च तदर्धैस्तदनुजानाम् ॥ १७५ ॥

इसी प्रकार युवराज के लिये भी पांच गृह बनाना चाहिए जिसमें प्रथम गृह का विस्तार ८० हाथ करना बाद के चार मकानों में छः छः हाथ कम करके विस्तार कल्पना करना चाहिये यथा द्वितीय गृह का विस्तार ७४ हाथ, तृतीयका ६८, चौथेका विस्तार ६२, और पांचवे गृहका विस्तार ५६, हाथ होना चाहिये, विस्तार में विस्तार का तृतीयांश जोड़कर दीर्घ कल्पना करै। इसी तरह युवराज के छोटे भाई और भृत्यों के लिये युवराज गृह के आधा विस्तार और विस्तार के तृतीयांश में विस्तार जोड़कर दीर्घ कल्पना करना चाहिये ॥१७५॥

अथ सामन्तप्रवरराजपुरुषकञ्चुकिवेश्याकलाज्ञानांगृहलक्षणान्याह—

नृपसचिवान्तरतुल्यं सामन्तप्रवरराजपुरुषाणाम् ।
नृपयुवराजविशेषः कञ्चुकिवेश्याकलाज्ञानाम् ॥ १७६ ॥

राजा के जो पांच गृह एवं मन्त्रिका जो पांच गृह है क्रम से उसके अन्तर तुल्य माण्डलिक राजा और प्रधान राजपुरुष का गृह बनाना चाहिये यथा राजा के प्रथम गृह के विस्तार में मन्त्री के प्रथम गृहका विस्तार घटाकर विस्तार कल्पना करना दीर्घ में दीर्घ को घटाकर दैर्घ्य कल्पना करना चाहिये एवं राजा और युवराज गृह के अन्तर तुल्य कञ्चुकी और वेश्या का गृह बनाना चाहिये ॥ १७६ ॥

अथाध्यक्षाधिकृतकर्मान्ताध्यक्षदूतानां पञ्चगृहाण्याह—

अध्यक्षाधिकृतानां सर्वेषां कोशरति तुल्यम् ।
युवराज मन्त्रि विवरं कर्मान्ताध्यक्ष दूतानाम् ॥ १७७ ॥

गोशाला, और घोड़ साल, हाथीसारादि के अधिकारियों तथा और भी कार्यों के जो मालिक हैं उन सब के लिये कोश गृहके वा रति गृहके बराबर बनाना चाहिये जितने दीर्घ विस्तार का कोश गृह वा रति गृह बना हो उतने ही दीर्घ विस्तार का बनाना उचित है और कर्म शाला में जो मालिक हैं उनका

और दूतों ( कर्मचारियों ) का गृह युवराज और मन्त्री के गृह के दीर्घ विस्तार का जो अन्तर है उसके बराबर अर्थात् दीर्घ, दीर्घ का अन्तर दीर्घ विस्तारों का अन्तर विस्तार रखना चाहिये ॥ १७७ ॥

अथ दैवज्ञभिषक्पुरोहितानां वास्तुप्रमाणान्याह ।

चत्वारिंशद्धीना चतुश्चतुर्भिस्तु पञ्चयावदिति ।
षड्भागयुतादैर्घ्यं दैवज्ञ पुरोधसोर्भिषजः ॥१७८॥

ज्यौतिषी और वैद्य पुरोहितों के गृह बनाने में विस्तार प्रथम गृह का ४० रखना, द्वितीय का ३६, तीसरे का ३२, इसी तरह चौथे गृह का २८, पांचवें का २४, विचार कर रखना और दीर्घ प्रत्येक गृह के विस्तार में उसी का छठां हिस्सा जोड़ कर रखना चाहिये ॥ १७८ ॥

इति गृहप्रकरणम्—

अथ गृहप्रवेश प्रकरणम्—

तत्र वसिष्ठः—

अपूर्वसंज्ञं प्रथमप्रवेशं यात्रावसाने च सपूर्वसंज्ञम् ।
द्वंद्वाह्वयश्चाग्निभयादि जातस्त्वेवं प्रवेशस्त्रिविधः प्रदिष्टः॥१॥

नूतन गृह में प्रथम २ प्रवेश को अपूर्वसंज्ञक प्रवेश कहते हैं और यात्रा के अन्त में जो प्रवेश होता है उसको सपूर्वप्रवेश कहते हैं, अग्नि आदि के भय से जो गृह गिरकर नया बना हो उसमें जो प्रवेश होता है उसको द्वंद्वाह्व कहते हैं। इस प्रकार प्रवेश तीन प्रकार के होते हैं ॥ १ ॥

तथाचान्यः—

वधूप्रवेशो न दिवा प्रशस्तः राजप्रवेशो न निशि प्रशस्तः ।
दिवा च रात्रौ च गृहप्रवेशः सत्कीर्तिदस्स्यात्त्रिविधः प्रवेशः२

वधू प्रवेश दिन में शुभ नहीं होता, लिखा भी है ( निशि वधूसंवेशमङ्गे-स्थिरे ) राजप्रवेश याने यात्रा के अन्त में जो गृहप्रवेश होता है वह रात्रि में शुभ नहीं है और गृहप्रवेश दिवारात्रि दोनों समय में शुभ होता है, इस प्रकार त्रिविध प्रवेश होता है ॥ २ ॥

अथ नारदः—

आदौ सौम्यायने कार्यं नववास्तु प्रवेशनम् ।
राज्ञा यात्रानिवृत्तौ च यद्वा द्वंद्वप्रवेशनम् ॥ ३ ॥

उत्तरायण सूर्य हों तो नूतनगृह में प्रवेश करना चाहिये । राजा के यात्रा निवृत्त होनेपर जो प्रवेश हो अथवा द्वंद्वात्मक जो प्रवेश हो वह भी इसी प्रकार होना चाहिये ।। ३ ।।

तथाचान्यः—

विधाय पूर्वदिवसे वास्तुपूजां वलिक्रियाम् ।
माघ-फाल्गुन-वैशाख-ज्येष्ठमासेषु शोभनः ॥४॥
प्रवेशो मध्यमो ज्ञेयः सौम्यकार्तिकमासयोः ।

पहले दिन वास्तु पूजा और वलिक्रिया करके माघ फाल्गुन वैशाख और ज्येष्ठ में गृह प्रवेश शुभ होता है; तथा सौम्य ( मार्गशीर्ष ) कार्तिक मास प्रवेश में मध्यम होता है ॥ ४ ॥

यथा वसिष्ठः—

माघेऽर्थ लाभः प्रथमप्रवेशः पुत्रार्थलाभः खलु फाल्गुने च ।
चैत्रेऽर्थहानिर्धनधान्यलाभो वैशाखमासे पशुपुत्रलाभः ॥

ज्ये. प्र.—

गृहारम्भोदितेमासेर्धिष्ण्येवारे विशेद्गृहम् ॥
विशेत्सौम्यायने हर्म्यं तृणागारे तु सर्वदा ॥५॥

गृहारंभके कहे हुये नक्षत्र वार में सूर्य उत्तरायण हों तो हर्म्य ( ईंट-पत्थर-मिट्टी के ) गृहमें प्रवेश करना शुभ होता है। तृण गृहमें सर्वदा प्रवेश कर सकते हैं ॥ ५ ॥

त्रिविध प्रवेशे विशेषः—

क्रूरग्रहाधिष्ठित विद्धभं च विवर्जनीयं त्रिविधप्रवेशे ।
शुक्ले च पक्षे सुतरांप्रवृद्ध्यै कृष्णे च तावद्दशमींच यावत्॥

पापग्रह जिस नक्षत्र पर हों और पाप विद्ध जो नक्षत्र ये सब त्रिविध प्रवेश में त्याज्य करना चाहिये। शुक्ल पक्ष में प्रवेश करना निरन्तर वृद्धि के लिये होता है पर कृष्ण पक्ष में दशमी तिथि पर्यन्त ही प्रवेश करना चाहिये वाद नहीं ॥ ६ ॥

चित्रोत्तराधातृशशाङ्कमित्र-
वस्वन्त्यवारीश्वरभेषु नूनम् ।

आयुर्धनारोग्यसुपुत्रपौत्र-
सुकीर्तिदः स्यात्त्रिविधः प्रवेशः ॥ ७ ॥

चित्रा उत्तरा ३ रोहिणी मृगशिरा अनुराधा धनिष्ठा रेवती और शतभिष इन नक्षत्रों में त्रिविध प्रवेश करने से आयु धन आरोग्य पुत्र पौत्र और यशकी वृद्धि होती है ॥ ७ ॥

योगयात्रायां वाराहः—

पौष्णे धनिष्ठास्वथ वारुणेषु
स्वायंभुवर्क्षेषु त्रिषूत्तरासु ।
अक्षीणचन्द्रे शुभवासरे च
तिथावरिक्ते च गृहप्रवेशः ॥ ८ ॥

रेवती धनिष्ठा शतभिषा रोहिणी उत्तरा ३ ये नक्षत्र हों चन्द्रमा क्षीण नहीं हो शुभवार हो रिक्ता से अतिरिक्त तिथि हो तो गृह प्रवेश शुभ होता है ॥ ८ ॥

नारदः

शुभः प्रवेशो देवेज्यशुक्रयोर्दृश्यमानयोः ।
व्यर्कारवारतिथिषु रिक्तामावर्जितेषु च ॥ ९ ॥
वस्वीज्यान्त्येन्दुवरुणत्वाष्ट्रमित्रास्थिरोडुषु ।
दिवा वा यदि वा रात्रौ प्रवेशो मंगलप्रदः ॥१०॥

वृहस्पति शुक्र उदय हों, रवि मङ्गलवार एवं रिक्ता अमावास्या तिथि को परित्याग कर के धनिष्ठा पुष्य रेवती मृगशिरा शतभिषा चित्रा अनुराधा स्थिर ( उत्तरा. ३ रोहिणी ) नक्षत्र हो तो दिन या रात्रि में प्रवेश शुभद होता है ॥ १० ॥

तथा च वैद्यनाथः

त्र्युत्तरे रोहिणी युग्मे रेवत्यां वासवद्वये ।
पुष्ये त्वाष्ट्रद्वये मैत्रे प्रवेशोऽभिहितः करे ॥

एवमेव रत्नमालायाम्—

पुष्ये धनिष्ठामृदुवायुमूलस्थिराश्विनीविष्णुजलेशहस्ते ।
एषु प्रवेशो बहुपुत्रपौत्रैश्चिरं वसेद्भूरिसमागमैश्च इति ॥

अथ लग्नफलम्

मेषे यानं घटे व्याधिर्धान्यहानिर्मृगे गृहम्।
विशतां कर्कटे नाशः शेषलग्नेषु शोभनम् ॥ ११ ॥

दैवज्ञवल्लभे—

निन्दिता अपि शुभांशसमेतास्तौलिमेषमकराः सकुलीराः।
कर्तुरौपचयगाश्चविलग्ने राशयः शुभफलाश्च भवन्ति ॥१२॥

मेष लग्न में प्रवेश करने से यात्रा, कुंभ में रोग, मकर में धान्य हानि, कर्क में नाश और शेष लग्न शुभ होता है। परञ्च निन्दित भी लग्न शुभ नवांश से युक्त हो अथवा तुला, मेष, मकर और कर्क ये चार राशियां भी यदि कर्त्ता के राशि से उपचय होकर लग्न में हो तो प्रवेश शुभ ही होता है ॥ ११-१२ ॥

तथान्यः लल्लः—

व्याधिहा धनहा चैव वित्तदो वन्धुनाशकृत्।
पुत्रहा शत्रुहा स्त्रीघ्नः प्राणहा पिटकप्रदः ॥१३॥
सिद्धिदो धनदश्चैवभवेत्तज्जन्मराशिगः।
लग्नस्थः क्रमशोराशिर्जन्मलग्नात्प्रवेशने ॥१४॥

अब जन्मराशि जन्मलग्न से द्वादशराशि गत प्रवेश लग्न का फल यों है यदि जन्म का राशि लग्न प्रवेश का हो तो रोगनाश, द्वितीय हो तो धननाश, तृतीय हो तो धनद, चौथे हो तो वन्धुनाश, पञ्चम हो तो पुत्रहानि, षष्ठ हो तो शत्रुनाश, सातवां हो तो स्त्रीनाश, आठवां हो तो प्राणनाश, नवम हो तो पिटक रोग, दशम हो तो कार्यसिद्धि, एकादश हो तो धनलाभ, और द्वादश हो तो अशुभ होता है ॥ १३-१४ ॥

अथ लग्नादिशुद्धिस्तत्ररामः—

त्रिकोणकेन्द्रायधनत्रिगैः शुभै-
र्लग्नात्त्रिषष्ठायगतैश्चपापकैः।
शुद्धाम्बुरन्ध्रेविजनुर्भमृत्यौ
व्यर्कारिक्ताचरचैत्रदर्शे ॥ १५ ॥

लग्न से त्रिकोण ( ५, ६ ) केन्द्र ( १, ४, ७, १०, ), २, ३ में शुभग्रह हों ३, ६, ११, में पापग्रह हो, ४, ८, शुद्ध हो और जन्मराशि लग्न से अष्टम लग्न न हो, रवि, मङ्गल रिक्ता तिथि को परित्याग करके तथा चरलग्न चैत्र मास अमावास्या तिथि को परित्याग कर प्रवेश शुभ होता है ॥ १५ ॥

वसिष्ठः—

कृत्वा शुक्रं पृष्ठतो वामतोऽर्कं
विप्रान्पूज्यानग्रतोपूर्णकुम्भान् ।
रम्यं हर्म्यं तोरणं स्रग्वितानैः
सम्यक्स्त्रीभिर्गीतवाद्यैर्विशेत्तत् ॥ १६ ॥

शुक्र को पृष्ठ भाग में और रवि को वाम करके ब्राह्मणों को पूजन कर पूर्ण कलश को आगे करके तोरण माला वितान से शोभित गृह में स्त्री समूहों के गीत से युक्त वाद्य ( बाजा ) करके प्रवेश करना उत्तम होता है ॥ १६ ॥

तत्र रामदैवज्ञः—अग्रेऽम्बु पूर्णं कलशं द्विजांश्च
कृत्वा विशेद्वेश्म भकूटशुद्धम् ।

श्रीपतिरप्याह—कृत्वा विप्रान् सजल कलशं चाग्रतो वामतोऽर्कं-
स्नातः स्रग्वी विमल वसनो मङ्गलैर्वेदघोषैः ।
व्यस्तैः यात्राकथितशकुनैर्द्वार मार्गेणराजा-
हर्म्यं पुष्पप्रकररुचिरं तोरणाढ्यं विशेच्च ॥

अथवामरविस्तत्ररामः—

वामोरविर्मृत्युसुतार्थलाभतो-
ऽर्के पञ्चमे प्राग्वदनादिमन्दिरे ।
पूर्णातिथौ प्राग्वदने गृहे शुभो
नन्दादिके याम्यजलोत्तराननने ॥ १७ ॥

पूर्वाभिमुख गृह में प्रवेश करने में प्रवेश लग्न से जो अष्टम उससे पांच राशि तक सूर्य हों, दक्षिण मुख गृह के लिये पञ्चम से पांच राशि, पश्चिमाभिमुख गृह के लिये द्वितीय से पांच राशि और उत्तराभिमुख गृह के लिये एकादश से पांच राशि तक सूर्य हों तो वाम रवि होते हैं ।

एवं पूर्णा ५, १०, १५ तिथि में पूर्व मुख गृह में नन्दा १, ६, ११ तिथि में दक्षिण मुख भद्रा तिथि २, ७, १२, में पश्चिम मुख और जाया ३, ८, १३ तिथि में उत्तराभिमुख गृह में प्रवेश शुभ होता है ॥ १७ ॥

तथान्यः—रन्ध्रात्पुत्राद्धनादायात् पञ्चस्वर्के स्थितेक्रमात् ।
पूर्वाशादिमुखं गेहं विशेद्वामो भवेद्यतः ॥

अथ प्रवेशे कुम्भचक्रम्—

वक्त्रे भूरविभात्प्रवेशसमये कुम्भेऽग्निदाहः कृताः
प्राच्यामुद्वसनं कृतायमगताः लाभः कृताः पश्चिमे ।
श्रीर्वेदाः कलिरुत्तरे युगमिता गर्भे विनाशो गुदे
रामाः स्थैर्यमतः स्थिरत्वमनलाः कण्ठे भवेत्सर्वदा ॥ १८ ॥

प्रवेश के समय कलश चक्र बनाना उसमें सूर्य. के नक्षत्र से कलश चक्र के मुख में एक नक्षत्र दिया जायता उसमें प्रवेश करने से अग्निदाह होता है । बाद ४ नक्षत्र पूर्व में दिया जाय तो उद्वास, बाद ४ नक्षत्र दक्षिण में दिया जाय तो लाभ, बाद ४ नक्षत्र पश्चिम में देने से उसका फल लक्ष्मी प्राप्ति, बाद ४ नक्षत्र उत्तर में दिया जाय ता उसका फल कलह, बाद ४ नक्षत्र गर्भ में दिया जाय तो उसका फल गर्भ नाश, बाद गुदा में ३ नक्षत्र देने से स्थिरता, बाद इसके ३ नक्षत्र कण्ठ में दिया जाय तो उसमें प्रवेश करने से सर्वदा स्थिरता रहता है ॥ १८ ॥

यथोक्तम् ग्रन्थान्तरे—

प्रवेशे कलशेऽर्कर्क्षात्पञ्च नागाष्टषट् क्रमात् ।
अशुभं च शुभं ज्ञेयमशुभं च शुभं तथा ॥

अथात्र नारदः—

अकपाटमनाच्छन्नमदत्तबलिभोजनम् ।
गृहं न प्रविशेदेवं विपदामाकरं हि तत् ॥ १९ ॥

विना किवाड़ का विना ढ़का हुआ और जिस गृह में बलिदान और ब्राह्मण भोजन नहीं भया हो ऐसे गृहमें प्रवेश नहीं करना चाहिये । क्योंकि वह गृह विपत्तियों का खजाना है ॥ १९ ॥

अथ प्रवेशे कर्तव्यतामाह—

एवं सुलग्ने स्वगृहं प्रविश्य
वितानपुष्पश्रुतिघोषयुक्तम् ।

शिल्पज्ञ-दैवज्ञ-विधिज्ञ-पौरान्
राजार्चयेद्भूमिहिरण्यवस्त्रैः ॥ २० ॥

एवं पूर्वोक्त रीति के अनुसार शुभ लग्न में वितान ( छत वा चांदनी ) पुष्प ( फूल ) और वेदध्वनि से युक्त अपने गृह में प्रवेश करके शिल्पज्ञ ( चित्रकार ) दैवज्ञ ( ज्यौतिषी ) विधिज्ञ ( कर्मकाण्ड करानेवाले ). और पुरवासियों को भूमि सुवर्ण वस्त्रों करके राजा पूजन करैं ॥ २० ॥

श्रीपतिरप्याह—

ततोनृपो विप्रसुहृत्पुरोधसः
शिल्पज्ञ-भूगोलविदश्च भागिनः ।
धनैश्वरत्नैः पशुभिः समर्चयेत्
सदान्धदीनान् पुरवासिनस्तथा ॥

तथा च कश्यपः—

एवं यः प्रविशेद्राजा योगेदैवज्ञकीर्त्तिते ।
काले शास्त्रोक्तविधिना शरीरसुखमश्नुते ॥

अथ जीर्ण गृहप्रवेशः—

जीर्णे गृहेऽग्न्यादिभयान्नवेऽपि-
मार्गोर्जयोः श्रावणकेऽपि सत्स्यात्
वेशोऽम्बुपेज्यानिलवासवेषु-
नावश्यमस्तादिविचारणाऽत्र ॥ २१ ॥

जीर्ण गृह अग्नि आदि के भय से गिर गया हो उससे नूतन भी बनाया गया हो तो मार्गशीर्ष कार्तिक श्रावण मास में शतभिषा पुष्य स्वाती धनिष्ठा में प्रवेश शुभ है इसमें अस्तादि का विचार नहीं होता ॥ २१ ॥

यथोक्तं ज्योतिःप्रकाशे—

नित्ययाने गृहे जीर्णे प्राशनेपरिधानके ।
वधू प्रवेशेमाङ्गल्ये न मौढ्यं गुरुशुक्रयोः ॥

अथ यात्रानिवृत्तनरप्रवेश मुहूर्त्तः वृत्तशते—

भूपानां मृदुभिर्ध्रुवैः प्रविशनं यात्रानिवृत्तौ शुभम्
स्याद्भूयो गमनं चरर्त्तलघुभे रुद्रैर्मृतिर्भूपतेः।
तिद्दणैर्भूपकुमारकस्य नृपतेः पत्न्या विशाखाह्वये
धिष्णये हव्यभुजोगृहंप्रविशतां संदह्यते वह्निना॥

राजाओं को यात्रा निवृत्ति होने पर मृदु ( मृ. रे. चि. अनु. ) ध्रुव (उ. ३. रो. ) नक्षत्र में प्रवेश शुभ होता है बाद इसके चर ( स्वा. पुन. श्र. ध. श. ) लघु ( ह. अश्वि. पुष्य. ) और आर्द्रा में पुनः यदि प्रवेश करें तो मृत्यु होती है। यदि तीक्ष्ण ( मू. ज्ये. आश्ले. ) नक्षत्र में प्रवेश करें तो राजकुमार की मृत्यु होती है। विशाखा में राज पत्नी की मृत्यु होती है। और कृत्तिका में यदि प्रवेश करें तो अग्नि भय होता है॥ २२॥

तथा च वास्तुप्रदीपे—

वैशाखमासेऽपि च फाल्गुनेऽपि ज्येष्ठे प्रवेशः शुभदोगृहस्य।
यात्रानिवृत्तावथवा नवस्य भूमीभुजां द्विर्भवनस्थिरेषु॥२३॥

वैशाख, फाल्गुन, और ज्येष्ठ में द्विस्वभाव अथवा स्थिर लग्न हो तो यात्रा निवृत्त का प्रवेश अथवा नूतन गृह का प्रवेश भी शुभ होता है॥ २३॥

तथाह माण्डव्यः—

सूत्र-शङ्कु-शिला-द्वार-तुलाच्छादनपूर्वकम्।
कार्यस्तम्भप्रतिष्ठोक्ते धिष्ण्येवारेतिथौ तथा॥२४॥

सूत्र शङ्कु शिलान्यास द्वार कार्य गृहच्छादन इत्यादि स्तंभ प्रतिष्ठा के कहे हुये नक्षत्र और शुभवार शुभ तिथि में श्रेष्ठ होता है॥ २४॥

॥ इति गृहप्रवेश प्रकरणम्॥

अथ गोशालायां भूशोधनादिकमायादिकञ्च प्राग्वज्ज्ञेयम्। तत्रापि चरणी विचारः—

स्वामि हस्तप्रमाणेन दीर्घविस्तारसंयुतम्।
अष्टभिश्च हरेद्भागं शेषे चरणिरुच्यते॥ १॥

पशुहानिः पशोरोगः पशुलाभः पशुक्षयः
पशुनाशः पशोर्वृद्धिः पशुभेदो वहुः पशुः ॥ २ ॥

स्वामिके हाथ से दीर्घ विस्तार का गुणा करना आठसे भाग देना एकादि शेषवश चरणी का फल कहना चाहिये ॥ १ ॥ यथा—

१ शेषमें पशुहानि, २ में पशुरोग, ३ में पशुलाभ, ४ में पशुक्षय, ५ में पशु नाश, ६ में पशुवृद्धि, ७ में पशुभेद, और ८ में वहु पशु होता है ॥ २ ॥

अथाश्वगृहनिर्माणम्—वास्तुराजवल्लभे ।

तुरङ्गमाणां गृहवामभागे शालाचतुःषष्टि करा विधेया ।
शतार्द्धतो मध्यमिकाच दैर्घ्ये कनीयसी तैर्दशभिर्विहीना ॥
व्यासे च ज्येष्ठा तिथिहस्तमाना त्रयोदशैकादशभिः क्रमेण ।
तद्वाह्यभित्तिश्च करप्रमाणा पञ्चार्धपञ्चाऽधिकरोदयं स्यात् ॥३॥

गृहके वामभागमें अश्वशाला वनवाना उत्तमशाला ६४ हाथ लम्वी १५ हाथ चौड़ी मध्यमशाला ५० हाथ लम्वी १३ हाथ चौड़ी, और हीन शाला ४० हाथ लम्वी ११ हाथ चौड़ी होती है । इनके वाहरी भित्ति की ऊँचाई ५॥ हाथ, ५ हाथ और ४ हाथ करना चाहिये ॥ ३ ॥

अथाश्वस्थितिः—

तेजोहानिममीहया विदधते पूर्वापरस्यां नृणां ।
ते याम्योत्तरतो मुखाहि सततं कीर्तिर्यशो धान्यकम् ॥
कर्तव्योहिषणं प्रतीहकलशः स्थानं द्विहस्तोदयम् ।
तस्यास्तोरणमुच्छ्रितं च मुनिभिर्हस्तैः सुशोभान्वितम् ॥४॥

घोड़े पूर्व अथवा पश्चिम मुख वाँधने से तेजकी हानि करते हैं दक्षिण अथवा उत्तर मुख वांधने से कीर्तियश और धान्य की वृद्धि करते हैं, हिषण घोड़े के खाने की जगह को करते हैं उसके उपर कलश वनाना चाहिये । स्थान याने घोड़े के वांधने की जगह दो हाथ ऊँची आगे की ओर करना और उसमें तोरण ७ हाथ ऊँचा शोभा युक्त होना चाहिये ॥ ४ ॥

अथाश्वमानम्—

षष्ट्या साधुहयोऽङ्गुलैर्निगदितो वेदाङ्गुलेनाधिकः
श्रीवत्सस्त्वहिलाद एव च मनोहारी द्विसप्ताङ्गुलः ।
रागाग्र्यङ्गुलकैस्तु वाजि-विजयोऽशीत्या तथा वैभवः
शान्ताख्यस्तु युगाष्टमात्र उदये मानं हरेः सप्तधा ॥ ५ ॥

जो घोड़ा ६० अङ्गुल होता है उसको साधु कहते हैं। जो ६४ अङ्गुल हो उसको श्रीवत्स, जो ६८ अङ्गुल हो उसको अहिलाद, जो ७२ अङ्गुल ऊँचा हो उसको मनोहारि, ७६ अङ्गुल ऊँचा हो उसको विजय, ८० अङ्गुल ऊँचा हो तो वैभव और ८४ अङ्गुल ऊँचा घोड़ा शान्त नामक होता है, ये सात प्रकार के घोड़े होते हैं ॥ ५ ॥

अथ गजगृहनिर्माणम्—तत्रादौ कर्तव्यता—

सिंहद्वारं पूर्वमानेन कार्यं त्रिद्व्येका वा मालिकास्तम्भशीर्षे ।
स्यातांमध्ये तोड़कौ रक्षणार्थं तुल्यौ भागेनाधिकौ वापि सार्द्धौ

पहले कही हुई रीति के अनुसार सिंह द्वार ( सदर फाटक ) बनाना उसके स्तम्भ के शिरे पर तीन या दो या एक मालिका ( मदला ) ( मजिला ) बनाना और मध्य में रक्षा के लिये दो तोड़क याने अर्गलाकाष्ठ बनाना ये दोनो मोटाई और चौड़ाई में बराबर हों या अधिक कम हों वा सवाई हों या डेढे सभी प्रकार का बनाया जा सकता है ॥ ६ ॥

भागे दक्षिण-वामके च करिणांशाला हरेर्द्वारतः ।
कर्तव्या सुदृढोन्नता च कलशैर्घण्टादिभिर्भूषिता ॥
संकीर्णो रसतो नगैर्निगदितो मन्दो मृगश्चाष्टभिः ।
सर्वेषूत्तम भद्रजातिरुदितो नन्दैःकरैरुच्छ्रितः ॥ ७ ॥

सिंहद्वार के दक्षिण और वाम भाग में गजशाला ( हथिसार ) बनाना, गजशाला दृढ़ ऊँचा और घण्टा कलश आदि से युक्त हो, ६ हाथ ऊँचा हाथी संकीर्ण, ७ हाथ ऊँचा का मन्द, ८ हाथ ऊँचा का मृग और सब से उत्तम ९ हाथ ऊँचा भद्र जाति का हाथी होता है ॥ ७ ॥

गृहसमीपे त्याज्याः । कालिदासः—

वाराह-शार्दूल-शिवा-पृदाकवो गृध्राभिधोलूक-कपोत-वायसाः
स श्येन-गोधादि-वकादि-पत्रिणो विचित्रिता-नो शरणे शुभावहाः

वाराह ( शूकर ), शार्दूल ( व्याघ्र ), शिवा ( शृगाल ), पृदाकू ( सर्प ), ( सर्पः पृदाकुर्भुजगाः—इत्यमरः ) गृध्र, उल्लू, कपोत, वायस, श्येन, गोधा, वकादि पक्षी इनका चित्र गृह पर लिखना शुभ नहीं होता ॥ ८ ॥

गृहसमीपे ग्राह्याग्राह्यवृक्षाः । वास्तुराजवल्लभे—

वृक्षा दुग्ध-सकण्टकाश्चफलिनस्त्याज्या गृहाद्दूरतः ।
शस्ते चम्पकपाटले च कदली जाती तथा केतकी ॥
यामादूर्ध्वमशेषवृक्ष जनिता छाया न शस्तागृहे ।
पार्श्वे कस्य हरे रवीशपुरतो जैनानु चण्ड्याः क्वचित् ॥९॥

दुग्ध वाले वृक्ष, कांटे वाले वृक्ष, फूल वाले वृक्ष, गृह के समीप अच्छे नहीं होते । चंपा, गुलाब, केला, जाती और केतकी ये अच्छे होते हैं । एक प्रहर दिन के पीछे किसी वृक्ष की छाया गृह पर अच्छी नहीं होती । ब्रह्मा के मन्दिर के पार्श्व में, विष्णु, सूर्य और शिव के मन्दिर के सामने, जैन मन्दिर के पीछे और देवी के मन्दिर के किसी भाग में गृह वनाना शुभ नहीं है ॥ ९ ॥

तथास्य फलम्—

स दुग्धवृक्षा द्रविणस्य नाशं कुर्वन्ति ते कण्टकिनोऽरिभीतिम्
प्रजाविनाशं फलिनः समीपे गृहस्य वर्ज्याःकलधौतपुष्पाः ॥

दुग्ध वाले वृक्ष धननाश, कांटे वाले वृक्ष शत्रुभय और फूल वाले वृक्ष सन्ततिनाश करते हैं । गृह के समीप पीत पुष्प शुभ नहीं होता है ॥ १० ॥

तथान्यः—

दुष्टो भूतनिषेवितोऽपि विटपी नोच्छिद्यते शक्तितः ।
तद्वद्बिल्वशमी त्वशोकवकुलौ पुन्नागसच्चम्पकौ ॥
द्राक्षा पुष्पकमण्डपं च तिलकान् कृष्णां वपेद्दाडिमीं ।
सौम्यादेः शुभदौ कपित्थक-वटावौदुम्वराश्वत्थकौ ॥ ११ ॥

जो वृक्ष दुष्ट हो अथवा जिसमें भूत वास हो उसको काटना शुभद नहीं है। विल्व, शमी, अशोक, वकुल ( मौलेशरी ), पुन्नाग और चम्पा को भी काटना शुभ नहीं है। द्राक्षापुष्प का मण्डप चन्दन-वृक्ष, पीपली और अनार लगाना शुभद है, गृह से उत्तर कैंत, पूर्व में वट, दक्षिण में गुलर और पश्चिम में पीपल शुभद है ॥ ११ ॥

तथा च वृहत्संहितायाम्—

शाम्यादिष्वशुभफला जातास्तरवः प्रदक्षिणेनैते ।
उदगादिषु प्रशस्ताः प्लक्षवटोदुम्बराश्वत्थाः ॥ १२ ॥

पाकड़ का वृक्ष दक्षिण दिशा में अशुभ है। एवं वट वृक्ष पश्चिम में, उदुम्बर वृक्ष उत्तर में और पीपल पूर्व दिशा में अशुभ होता है। और पाकड़ उत्तर में शुभ है, एवं वट पूर्व दिशा में, उदुम्बर दक्षिण में और पीपल पश्चिम में शुभद होता है ॥ १२ ॥

तथा च गर्गः

वर्जयेत् पूर्वतोऽश्वत्थं प्लक्षं दक्षिणतस्तथा ।
न्यग्रोधं पश्चिमे भागे उत्तरे चाप्युदुम्बरम् ॥
अश्वत्थे तु भयं ब्रूयात् प्लक्षे ब्रूयात्पराभवम् ।
न्यग्रोधे राजतः पीड़ा नेत्रामयमुदुम्बरे ॥
वटः पुरस्ताद्धन्यः स्याद्दक्षिणे चाप्युदुम्बरम् ।
अश्वत्थः पश्चिमे भागे प्लक्षस्तूत्तरतो भवेत् ॥

अथात्रापि विशेषः ।

आसन्नाःकण्टकिनो रिपुभयदाः क्षीरिणोऽर्थनाशाय ।
फलिनः प्रजाक्षयकरा दारूण्यपि वर्जयेदेषाम् ॥१३॥
छिन्द्याद्यदि न तरूँस्तान् तदन्तरे पूजितान् वपेदन्यान् ।
पुन्नागाशोकारिष्टवकुलपनसान् शमीशालौ ॥ १४ ॥

वबुल, खैर आदि कांटे के वृक्ष गृह समीप में रहने से शत्रुभय होता है। दूध वाला वृक्ष गृह समीप होने से धननाश होता है। फल का वृक्ष समीप होने से सन्तान नाश करता है। परञ्च केवल रहने ही से ये फल नहीं होते यदि उनका काष्ठ गृह में लगाया जाय तो अशुभ होता है। यदि कण्टकादि वृक्षों को काटे नहीं और उनके मध्य में श्रेष्ठ पुन्नाग, अशोक, अरिष्ट, वकुल, पनस ( कटहर ), शमी, शाल ये रोप दिये जांय तो उपर्युक्त दोष नहीं होते हैं ॥ १३—१४ ॥

अथ वाटिकादिमाहात्म्यम्—

वाटिका वा तड़ागो वा कूपो वा यदि निर्मितः ।
गृहात्पूर्वे कुवेर्यां च वारुणे शम्भुकोणके ॥ १५ ॥
सदा सवित्री भविता सदा दानं प्रयच्छति ।
सदा यज्ञं स पूज्येत यो रोपयाति पादपम् ॥ १६ ॥

गृह से पूर्व या उत्तर अथवा पश्चिम या ईशान में जो वाटिका अथवा तड़ाग ( तालाब ) या कूप बनवाता है, वह सदा गायत्री का पुरश्चरण करता है । सदा दान देता है और सदा ही यज्ञ को करता है, ऐसा समझना चाहिये उसमें वृक्ष के निस्पत लता का फल ज्यादा है । जैसा कि लिखा है ॥ १५-१६ ॥

यथा—वरं भूमिरुहा पञ्च नतु कोष्ठरुहा दश ।
पत्रैः पुष्पैः फलैर्मूलैः कुर्वन्ति पितृतर्पणम् ॥

वास्तुप्रदीपेच—

क्षीरवृक्षा वटाश्वत्थरक्तपुष्पद्रुमास्तथा ।
सकण्टका शाल्मली च प्लक्षोदुम्बरसंज्ञकौ ॥१७॥
आग्नकोणे सदा दुष्टा मृत्युपीड़ा प्रदायकाः ।
पुन्नागफलिनीनिम्बदाडिमाशोकजातिकाः ॥ १८ ॥
नागकेशर-संपुष्पं जपाकुसुमकेसरे ।
जयन्ती चन्दनंप्रोक्तं वचा चैवापराजिता ॥
मधुविल्वाम्रभृङ्गाश्च नागरं कक्कुपादिकाः ।
यत्र तत्र स्थिताश्चैते नारिकेलादयः शुभाः ॥ १९ ॥

दुग्ध वृक्ष वट पीपल लालपुष्प का वृक्ष, कण्टकी वृक्ष, सेमर पाकड़ गुलर ये वृक्ष अग्नि कोणमें हमेशः दुष्ट होते हैं तथा मृत्यु और पीड़ा को भी देते हैं । पुन्नाग फलवालावृक्ष निम्ब दाडिम ( अनार ) अशोक जाती नागकेशर जपाकुसुम ( अढ़उल या देवीपुष्प ) केशर जयन्ती चन्दन वचा अपराजिता मधु विल्व आम्र भृङ्ग ( दालचिनी ) नागर नारिकेल ये सब चाहे जिस किसी दिशामें हों शुभ ही होते हैं ॥ १७१ ॥

अश्वत्थं च कदम्बं च कदली वीजपूरकम्।
गृहे यस्य प्ररोहन्ति सगृही न प्ररोहति ॥ २० ॥
सर्वत्र पनसः शस्तो दक्षिणे सकलाः खलाः।

पीपल कदम्ब कदली ( केरा ) वीजपूरक ( वीजूनीवू ) ये जिसके गृहमें रहता है वह गृही ( गृहमें रहने वाला ) बढ़ता नहीं है याने वंशादि उसके नहीं चलते, ॥ पनस ( कटहर ) सर्वत्र शुभ होता है पर दक्षिण दिशा में सभी वृक्ष बुरे होते हैं ॥ २० ॥

तथा च ग्रन्थान्तरे—

अश्वत्थमेकं पिचुमन्दमेकं
न्यग्रोधमेकं दशचिञ्चिणीकम्।
कपित्थविल्वामलकत्रयञ्च
पञ्चाम्रवापी नरकं न पश्येत् ॥ २१ ॥

एक पीपल एक निम्ब एक वट दश इम्ली, कैंत विल्व अवरा तीन और पांच आम को रोपने वाला मनुष्य नरक को नहीं देखता है ॥ २१ ॥

तथाचान्यः—

ईशाने रोपयेद्धात्रीं नैर्ऋत्ये चिञ्चिणीद्रुमान्।
आग्नेय्यां दाडिमं चैव वायव्ये विल्ववृक्षकम् ॥ २२ ॥
प्लक्षोत्तरे पूर्ववटं प्रशस्तं ह्युदुम्बरं दक्षिणभागकेच।
अश्वत्थवृक्षं दिशिवारुणस्यां मध्ये तथाम्रान्विविधप्रकारान् ॥

ईशान कोण में अवरा, नैर्ऋत्य कोण में इम्ली, अग्नि कोण में अनार वायव्य कोण में विल्व वृक्ष लगाना चाहिये। तथा पाकड़ उत्तर में, वट पूर्व में, उदुम्बर दक्षिण भाग में अश्वत्थ पश्चिम भाग में और मध्य में विविध प्रकार का आम रोपना चाहिये ॥ २२-२३ ॥ लिखा भी है यथा—

प्लक्षोत्तरे प्रशस्तश्च वटः पूर्वे च शोभनः।
उदुम्बरस्तथा याम्ये पिप्पलो वारुणे तथा ॥

तथान्यः--

याम्यनैर्ऋत्ययोर्मध्ये तथा जम्बुकदम्बकौ ।
पनसश्च तथाम्रश्च प्रशस्तौ शम्भुपूर्वयोः ॥ ८४ ॥
वाटिकायाः वहिः पूर्वे रोपयेद्वंशवृक्षकम् ।
उत्तरे च शमी वाह्ये पश्चिमे खदिरो वहिः ॥ ८५ ॥
दक्षिणे वकुलो वाह्येऽरिष्टनाशाय केवलम् ।
आम्राणां वाटिका चैव द्वितीयाश्वत्थवाटिका ॥ ८६ ॥
तृतीया वटवृक्षाणां चतुर्थी प्लक्षवाटिका ।
पञ्चमी निम्बवृक्षाणां षष्ठी जम्बुकवाटिका ॥ ८७ ॥
चिञ्चिणी वृक्ष-संभूता सप्तमी परिकीर्तिता ।
एतासां वाटिकानाञ्च प्रशस्ता चाम्रवाटिका ॥ २८ ॥
फलदा पुण्यदा चैव पापं संहरते ध्रुवम् ।
न तत्करोत्यग्नि होत्रं न पुत्रा योषितोद्भवाः ॥२६॥
यत्करोति घनच्छायः पादपः पथिरोपितः ॥

दक्षिण नैऋत्य के मध्य जामुन कदम्ब, ईशान पूर्व के मध्य कटहर आम लगाना शुभ है। एवं बगीचे के बाहर पूर्व दिशा में वांस लगाना शुभ होता है, उत्तर बाहर में शमी वृक्ष और बाहर पश्चिम दिशा में खैर लगाना शुभ है और बाहर दक्षिण दिशा में मौलेशरी शुभ होता है॥ प्रथम बगीचा आम्र का दुसरा पीपल का, तीसरा वट का, चौथा पाकड़ का, पांचवां निम्बका, छठा जम्बू का, और सातवां इम्ली का बगीचा होता है इन सवों में श्रेष्ठ आम का बगीचा होता है॥ जो मनुष्य अग्निहोत्र नहीं करता और जिसको औरत पुत्र भी नहीं है उसको आम्र के बगीचा लगानेही से सब पाप का हरण होकर पुण्य एवं स्वर्गादि फल मिलता है॥ २४—२६॥

यथोक्तम्—वाराहेण—

यो वाटिकां राजपथः समीपे
स्विष्टां तथा कूपसमन्विताञ्च ।

स्वर्गे च वासं लभते मनुष्य-
श्चतुर्युगं सर्वसुखैरुपेतः ॥ ३० ॥

जो मनुष्य राजपथ ( सड़क ) के समीप सुन्दर बगीचा और उत्तम कूप ( इनारा ) बनवाता है वह चार युग पर्यन्त सभी सुखों से युक्त स्वर्ग में वास करता है ॥ ३० ॥

वास्तुराज वल्लभे—

वामे भागे दक्षिणे वा नृपाणां
त्रेधा कार्या वाटिका क्रीडनार्थम् ।
एकद्वित्रिदण्डसंख्याशतं स्यान्
मध्ये धारामण्डपं तोययन्त्रैः ॥३१॥

राजाओं के गृह के वाम वा दक्षिण भाग में क्रीड़ा करने के लिये १०० हाथ २०० हाथ या ३०० हाथ की वाटिका बनाना चाहिये इसके मध्य में जल प्रपान मण्डप और जलयन्त्र ( फुहारा ) लगाना चाहिये ॥ ३१ ॥

क्षेत्रं सप्तविभागभाजितमतो भद्रं च भागत्रय ।
तन्मध्ये जलवापिका जिनपदैरेकांशतो वेदिका ॥
स्तम्भैर्द्वादशभिश्च मध्यरचितः कोणेषु रूपान्वितः ।
कर्तव्यो जलयन्त्र एष विधिवद्भोगाय पृथ्वीभुजाम् ॥३२॥

जलयन्त्र बनाने के स्थान को सात सात भाग याने ४९ भाग करना इसके मध्य में चारो ओर तीन भाग में भद्र ( चबूतरा ) बीच के २४ भाग में जलवापिका याने हौज बनाना सबके मध्य में एक भाग में वेदी बनाना मध्य में बारह स्तंभ युक्त मण्डप बनाना । कोणों में रूपान्वित ( नकासी ) करना ऐसा जलयन्त्र राजाओं के भोग के लिये बनाना चाहिये ॥३२ ॥

तस्यां चम्पककुन्दजातिसुमनोवल्ली च निर्मालिका ।
जातीहेमसमानकेतकिरपि श्वेता तथा पाटला ॥३३॥
नारिङ्गः करणी वसन्तलतिका चारक्तपुष्पादिकं ।
जंवीरो वदरी च पूगमधूपा जम्बू च चूतद्रुमाः ॥ ३४ ॥

3109

मालूरः कदली च चन्दनवटावश्वत्थपथ्या शिवाः ।
चिञ्चा शोक कदम्ब निम्बतरवः खर्जूरिका दाड़िमा ॥३५॥
कर्पूरागुरुकिंशुका हयरिपुः पुन्नागको निम्बुकी ।
प्रोक्ता नागलता च वीजनिभृतास्यात्तिन्दुकी लाङ्गली ३६

पहले कहे हुये वाटिका में चम्पा, कुन्द, चमेली, वेला, निर्मालिका ( नरमाली ), जाती पीले फूल की केतकी, सफेद गुलाव, नारियल, कनैल, वसन्तलता, लाल पुष्प, जंवीर ( नीबू ), वदरी ( वैर ), पूगी ( सुपारी ), मधूप ( महुआ ), चूत ( आम्र ), मालूर ( विल्व ), कदली, चन्दन, वट, अश्वत्थ ( पीपल ), पथ्या ( हरीतकी ), शिवा ( आंवला ), चिंचा ( इमली ), अशोर, कदम्ब, निम्ब, खजूर, दाड़िम ( अनार ), कपूर, अगर, किंशुक ( पलाश ), हयरिपु ( सफेद कनैल ), पुन्नाग ( जायफल ), नीबू, नागलता ( नागवेल ), वीजनिभृता ( वीजू नीबू ), तिन्दुकी ( तेंदुआ ), लांगली ( करिहारी ), इन वृक्षों को लगाना चाहिये ॥ ३३—३६ ॥

द्राक्षैलाशतपत्रिका च वकुला धत्तूरकङ्कोलकौ ।
सालास्तालतमालकौ मुनिवरौ मन्दार पारिद्रुमौ ॥
अन्ये भोग्यविचित्रखाद्यसकलास्ते रोपणीया बुधैः ।
यं प्राप्नोति च भूतले शुभतरुं तच्चम्पकान् वापयेत् ॥३७॥
अस्थानप्रतिसेचनाय च घटीयन्त्रः सुसारोभवेत् ।
दोला स्त्रीजनखेलनाय रुचिरे वर्षावसन्तोत्सवे ॥
वाला-प्रौढ़वधू सुमध्यवनितागानैर्मनोहारिभिः ।
ग्रीष्मे शारदकेऽथ शीतलजलक्रीड़ा शुभे मण्डपे ॥३८॥

द्राक्षा ( दाख-अङ्गूर ), एला ( इलाइची ), शतपत्रिका ( शतावरी ), वकुल ( मौलेशरी ), धत्तूर, कंकोल, शाल, ताल, तमाल, अगस्त, मन्दार ( मदार ), पारिजात तथा और भी उत्तम फूल के वृक्षों को लगाना तथा चम्पा सबसे अलग लगाना चाहिये । वृक्षों को सेचन करने के लिये सार वृक्षों का घटीयन्त्र वनाना, वर्षा और वसन्त में स्त्रियों के खेलने के लिये दोला वनाना । एवं ग्रीष्म और शरद् ऋतु में शीतल जलक्रीड़ा के लिये मण्डप वनाना उचित है ॥ ३७—३८ ॥

अथ गृहाच्चतुर्दिक्षु पादपरोपणमुहूर्तः ॥

लतागुल्मवृक्षरोपो हस्तपुष्याश्विनीध्रुवैः ।
विशाखा-मृग-मूलाह्व-वारुणैश्च प्रशस्यते ॥ ३८ ॥
गुरौकेन्द्रे शुभे शुक्रे विधौ वारिणि वोदये ।
शुभयुक्तेक्षितेबन्धौ सद्वारे वा शुभोदये ॥ ३९ ॥

हस्त, पुष्य, अश्विनी, उत्तरा ३, रोहिणी, विशाखा, मृगशिरा, मूल और शतभिष ये नक्षत्र हों, गुरु केन्द्र में हों, शुक्र अच्छे हों, चन्द्रमा जलचर राशि में हों अथवा लग्न जलचर हो, चतुर्थ में शुभग्रह का योग दृष्टि हो, शुभ वार अथवा शुभ लग्न हो तो; लता, गुल्म वृक्ष का रोपण शुभ होता है ॥ ३८—३९ ॥

अथ लतादिरोपणमन्त्रः ।

"ॐ वसुधेति च सीतेति पुण्यदेति धरेति च । नमस्ते शुभगे देवि द्रुमोयं वर्द्धतामिति," इस मन्त्र से वृक्षादिरोपण उत्तम होता है ।

अथ बृहस्पतिः—

सोमवारयुते मूले चापलग्ने महाद्रुमान् ।
स्थापयेज्जीवलग्ने च रेवत्यां गुरुवासरे ॥ ४० ॥

अथवा सोमवार के दिन मूल नक्षत्र हो तो धनुर्लग्न में वृक्ष रोपण शुभ है अथवा गुरुवार को रेवती नक्षत्र हो और गुरु लग्न में हों तो भी बड़े २ वृक्षों का रोपण शुभ होता है ॥ ४० ॥

अथ शक्तियामलोक्तवृक्षचक्रम्—

सूर्यभाद्दिनभं यावद् वृक्षचक्रं विधीयते ।
त्रयं मूले भवेद्रोगस्त्वचि त्रीणि धनागमः ॥ ४१ ॥
वेदश्शाखासु नाशः स्यात् पत्रे युग्मं दरिद्रता ॥
शीर्षे त्रीणि शुभं प्रोक्तं पूर्वे एकन्तु मृत्युदम् ॥४२॥
सुतनाशं पञ्च याम्ये पश्चिमे द्वे धनप्रदे ॥
स्याद्वेद उत्तरे लाभ इत्युक्तं शाक्तियामले ॥ ४३ ॥

वृत्त चक्र में सूर्य के नक्षत्र से दिन नक्षत्र तक गिन कर पहले ३ नक्षत्र मूल में दिया जाय उसमें यदि वृक्ष रोपण हो तो रोग होता है । उसके वाद त्वचा में ३ नक्षत्र का फल धनागम, उसके वाद शाखा में ४ नक्षत्र का फल नाश उसके वाद पत्ते पर २ नक्षत्र का फल दरिद्रता, वाद उसके शीर्ष पर ३ नक्षत्र का फल शुभ है । उसके वाद पूर्व में १ नक्षत्र का फल मृत्युकारक, वाद इसके दक्षिण में ५ नक्षत्र का फल पुत्रनाश, वाद पश्चिम में २ नक्षत्र का फल धनद, उसके वाद उत्तर में ४ नक्षत्र का फल लाभ है । यह शक्तियामल में लिखा है ॥ ४१—४३ ॥

अथान्यः—

तिथिवारसमायुक्तं सूर्यभादिन्दुभंयुतम् ।
नवभिस्तु हरेद्भागं शेषाङ्के रोपणं फलम् ॥ ४४ ॥
एके शरे त्रि फलितं निष्फलं वेदपक्षयोः ।
वसौषष्ठे भवेल्लाभो सप्तमे नवमे मृतिः ॥ ४५ ॥

सूर्य के नक्षत्र से चन्द्र नक्षत्र तक गिन कर उसमें तिथि वार मिलाकर और ९ का भाग देना, शेषाङ्क से वृक्षरोपण का फल है । यथा १, ५, ३, शेष में वृक्ष फलता है । ४, २, शेष में निष्फल होता है, ८, ६, में लाभ और ७, ९, शेष में मृत्यु होता है ॥ ४४—४५ ॥

इति गृहाचतुर्दिक्षु पादपरोपण विचारः ।

---

अथदकार्गलम् ।

अथ दकार्गलं व्याख्यायते तत्रवाराह:—

धर्म्यं यशस्यं च वदाम्यतोऽहं
दकार्गलं येन जलोपलब्धिः ।
पुंसां यथाङ्गेषु शिरास्तथैव-
क्षितावपि प्रोन्नतनिम्नसंस्थाः ॥१॥
एकेन वर्णेन रसेन चाम्भश्च्युतं
नभस्तो वसुधाविशेषात् ।

नानारसत्वं बहुवर्णतां च
गतं परीक्ष्यं क्षितितुल्यमेव ॥२॥

अब इस प्रकरण के बाद वाराहमिहिर का कहा हुआ दकार्गल ( जलोपलब्धि प्रकार ) कहता हूं यह दकार्गल कैसा है कि धर्म और यश को देता है, जैसे पुरुष के अङ्गमें ऊँची नीची शिरायें होती हैं वैसे ही भूमि के भी ऊँची नीची शिरायें हैं, जल एकही वर्ण और रस (स्वाद) से युक्त होकर आकाश से गिरता है पर भूमि विशेष होने के कारण नाना रस और नाना प्रकार का वर्ण हो-जाता है अतः भूमि वर्ण के तुल्य नाना प्रकार के रस वर्ण का विचार करना चाहिये ।

यथोक्तम्—सशर्करा ताम्रमही कषायं क्षारं धरित्री कपिला करोति ।
आपाण्डुरायां लवणं प्रदिष्टमिष्टं पयो नीलवसुन्धरायाम् ॥

अथ शिरानामान्याह—

पुरुहूतानलयमनिर्ऋतिवरुणपवनेन्दुशङ्करा देवाः ।
विज्ञातव्याः क्रमशः प्राच्याद्यानां दिशां पतयः ॥३॥
दिक्पतिसञ्ज्ञा च शिरा नवमी मध्ये महाशिरानाम्नी ।
एताभ्योऽन्याः शतशो विनिःसृता नामभिः प्रथिताः ॥४॥
पातालादूर्ध्वशिरा शुभा चतुर्दिक्षु संस्थिता याश्च ।
कोणदिगुत्था न शुभाः शिरानिमित्तान्यतो वक्ष्ये ॥५॥

इन्द्रादि देवता क्रम से पूर्वादि दिशाओं के स्वामि होते हैं जैसे पूर्व का इन्द्र, अग्निकोण का अग्निदेव, दक्षिण का यम निर्ऋति का नैऋत्य पश्चिम का वरुण वायव्य का वायु देव उत्तर का चन्द्रमा और ईशान कोण का स्वामि शङ्कर जी होते हैं, दिशाओं के जो पति कहे तन्नामोपलक्षित शिरा होता है । जैसे पूर्व दिशा में जो शिरा है उसका नाम ऐन्द्री अग्निकोण में आग्नेयी दक्षिण में याम्या इसी तरह शेष दिशा में भी नाम होता है, एवं आठ दिशा में आठ शिरा होते हैं मध्य में महाशिरानामक नववी शिरा होती है, याने पूर्वोक्त दिशा और कोण के मध्य में नववी महाशिरा होती है और इन नवों शिराओं से अन्य भी सैकड़ों शिरायें होती हैं जिनका नाम पृथक् २ होता है, पाताल में ऊर्ध्व जो शिरा होती है वह शुभ है जो शिरा चतुर्दिक्षु में हैं वे भी शुभ होती हैं कोणादि से उत्पन्न शिरा शुभ नहीं होती अतः अब शिरा चिन्ह कहता हूं ॥

अथ तानि ताह—

यदि वेतसोऽम्वुरहिते देशे हस्तैस्त्रिभिस्ततः पश्चात् ।
सार्द्धे पुरुषे तोयं वहति शिरा पश्चिमा तत्र ॥६॥
चिह्नमपि चार्धपुरुषे मण्डूकः पाण्डुरोऽथ मृत् पीता ।
पुटभेदकश्च तस्मिन् पाषाणो भवति तोयमधः ॥७॥

जल रहित देश में याने जिस में स्वभावही में जल नहीं निकलता उस देश में यदि वेतस ( वेंत ) वृक्ष देख पड़े तो उस वृक्ष से पश्चिम दिशा में तीन हाथ दूरी पर सार्द्ध पुरुष ( डेढ़ पोरसा ) नीचे जल कहना चाहिये वहां पर पश्चिमा शिरा बहती है ( पुरुष मान १२० अङ्गुल का जानना ) उसमें चिन्ह ये हैं उस स्थान में अर्ध पुरुष ( ६० अङ्गुल ) नीचे पर पाण्डुर ( कुछ सपेद पीला ) वर्ण का मेढक रहता है उसके नीचे पीत वर्ण मृत्तिका उसके नीचे पुटभेदक पाषाण ( पत्थर ) रहता है उसके वाद जल मिलता है ॥

तथा च सारस्वतः—

निर्जले वेतसं दृष्ट्वा तस्माद्वृक्षादपि त्रयम् ।
पश्चिमायां दिशि ज्ञेयमधः सार्धेन वै जलम् ॥
नरोऽत्र षष्ठिर्द्विगुणा चाङ्गुलानां प्रकीर्तितः ।
तत्र खात्वाऽर्धपुरुषं भेकः पाण्डुरवर्णकः ॥
मृत् पीता पुटभेदश्च पाषाणोऽधस्ततो जलम् ।
शिरा पश्चिमदिक्स्थात्र वहतीति विनिर्दिशेत् ॥

अन्यदप्याह—

जम्ब्वाश्चोदग्घस्तैस्त्रिभिः शिराधो नरद्वये पूर्वा ॥
मृल्लोहगन्धिका पाण्डुरा च पुरुषेऽत्र मण्डूकः ॥ ८ ॥

जल रहित देश में जम्बू वृक्ष हो तो उस वृक्ष से उत्तर दिशा में तीन हाथ दूरी पर दो पुरुष नीचे पूर्वा शिरा वहती है उसका चिन्ह यों है पहले १ पुरुष नीचे लोह सदृश गन्धकी मृत्तिका रहती है उसके वाद थोड़ा श्वेत उसके नीच मण्डूक ( भेंक ) रहता है ॥

अन्यदप्याह —

जम्बूवृक्षस्य प्राग्वल्मीको यदि भवेत् समीपस्थः ।
तस्माद्दक्षिणपार्श्वे सलिलं पुरुषद्वये स्वादु ॥ ९ ॥

**अर्धपुरुषे च मत्स्यः पारावतसन्निभश्च पाषाणः ।**
**मृद्भवति चात्रनीला दीर्घं कालं च बहुतोयम् ॥ १० ॥**

जम्बू वृक्ष से पूर्व समीप में ही यदि वल्मीक हो तो उस वृक्ष से ३ हाथ दक्षिण दो पुरुष नीचे खोदने से स्वादु (मीठा) जल होता है वहां पर भी चिन्ह ऐसा होता है, पहले आधे पुरुष नीचे खोदने से मछली देख पड़ती है उसके नीचे पारावत ( कबूतर ) सदृश वर्ण का पत्थर मिलता है उसके बाद नील वर्ण मृत्तिका रहती है उसके बाद चिरकाल व्यापी बहुत जल रहता है ॥ १० ॥

तथा च सारस्वतः—

जम्बूवृक्षात् पूर्वभागे वल्मीको यदि दृश्यते।
तरोर्दक्षिणतो हस्तांस्त्रींस्त्यक्त्वाऽधो जलं वदेत् ॥
नरद्वयेऽर्धपुरुषे मत्स्योऽश्मा पक्षिसन्निभः ।
ततोऽपि मृत्तिका नीला ततो मृष्टं जलं वदेत् ॥

अन्यदप्याह—

**पश्चादुदुम्बरस्य त्रिभिरेव करैर्नरद्वये सार्धे ।**
**पुरुषे सितोऽहिरश्माञ्जनोपमोऽधः शिरा सुजला ॥११॥**

यदि निर्जल देश में उदुम्बर ( गुलर ) वृक्ष देख पड़े तो उदुम्बर से पश्चिम ३ हाथ दूरी पर २॥ पुरुष नीचे स्वादु जल निकलता है यहां भी चिन्ह ये हैं आधे पुरुष नीचे पहले सपेद सर्प निकलेगा—उसके बाद अञ्जन सदृश काला पत्थर देख पड़ेगा उसके नीचे शिरा होगी जिसमें स्वादु जल रहता है यहां उदुम्बर के समीप वल्मीक हो या न हो इसके लिये विशेषता नहीं है ॥११॥

अन्यदप्याह—

**उदगर्जुनस्य दृश्यो वल्मीको यदि ततोऽर्जुनाद्धस्तैः ॥**
**त्रिभिरम्बु भवति पुरुषैस्त्रिभिरर्धसमन्वितैः पश्चात् ॥ १२॥**
**श्वेता गोधार्धनरे पुरुषे मृद्धूसरा ततः कृष्णा ॥**
**पीता सिताससिकता ततो जलं निर्दिशेदमितम् ॥१३॥**

अर्जुन वृक्ष के उत्तर दिशा यदि वल्मीक देख पड़े तो अर्जुन वृक्ष से पश्चिम ३ हाथ दूरी पर ३॥ पुरुष नीचे जलहोताहै । वहां चिन्ह ये होते हैं

पहले ½ पुरुष नीचे सपेद गोधा ( गोह ) देख पड़ेगी उसके एक पुरुष नीचे धूसर ( काला सपेद ) मृत्तिका वाद उसके काली मिट्टी उसके नीचे पीतवर्ण मृत्तिका उसके बाद वालु सहित सपेद मिट्टी उसके नीचे वहुत जल निकलेगा ऐसा कहना चाहिये ॥ १२ ॥ १३ ॥

अन्यदप्याह—

वल्मीकोपचितायां निर्गुण्ड्यां दक्षिणेन कथितकरैः ।
पुरुषद्वये सपादे स्वादु जलं भवति चाशोष्यम् ॥ १४ ॥
रोहितमत्स्योऽर्धनरे मृत् कपिला पाण्डुरा ततः परतः ।
सिकता सशर्कराऽथ क्रमेण परतो भवत्यम्भः ॥ १५ ॥

निर्गुण्डी ( सफेद फूलका एक वृक्ष होता है ) वृक्षके समीपवल्मीक होतो उस वृक्ष सें दक्षिण दिशामें ३ हाथ दूरी पर २¼ पुरुष नीचे स्वदुजल वहुत ( अगाध ) होता है उसका चिन्ह यों है पहले ½ पुरुष नीचे खोदने सें रोहित मछली मिलेगी उसके नीचे ( कपिल ) गौर वर्ण मृत्तिका उसके नीचे पाण्डुर ( कुछ सफेद ) मिट्टी उसके नीचे वालुका सहित मिट्टी उसके बाद जल मिलेगा ॥ १४-१५ ॥

अन्यदप्याह—

पूर्वेण यदि वदर्या वल्मीको दृश्यते जलं पश्चात् ।
पुरुषैस्त्रिभिरादेश्यं श्वेता गृहगोधिकार्द्धनरे ॥ १६ ॥

यदि वदरी ( वैर ) वृक्ष से पूर्वमें वल्मीक होवै तो वदरी वृक्ष से पश्चिम ३ हाथ दूरी पर ३ पुरुष नीचे जल कहना, पहले ½ पुरुप नीचे सफेद गृहगोधिका ( सरट = गिरगिट ) देख पड़ेगा । ( सरटः कृकलासः स्यान्मुसली गृहगोधिका इत्यमरः ) ॥ यथोक्तम्—

पूर्वभागं वदर्याश्चेद्वल्मीको दृश्यते जलम् ।
पश्चाद्धस्तत्रये वाच्यं खाते तु पुरुषत्रये ॥
अधःखातेऽर्धपुरुषे दृश्यते गृहगोधिका ।
श्वेतवर्णा ततोऽधःस्थं जलं भवति निर्मलम् ॥

अन्यदप्याह—

सपलाशा वदरी चेद्दिश्यपरस्यां ततो जलं भवति ।
पुरुषत्रये सपादे पुरुषेऽत्र च दुण्डुभश्चिन्हम् ॥ १७ ॥

निर्जलदेशमें पलाश सहित यदि बदरीवृक्ष देख पड़े वल्मीक सहित हो या-नहीं हो तो उस बदरीवृक्ष से पश्चिम ३ हाथ दूरी पर ३¼ पुरुष नीचे जल कहना यहां चिह्न यह है कि १ पुरुष नीचे पहले निर्विष सर्प मिलेगा, यथोक्तम् सारस्वतेन।

पलाशयुक्ता बदरी यत्र दृश्या ततोपरे।
हस्तत्रयादधस्तोयं सपादे पुरुषत्रये॥
नरे तु डुण्डुभः सर्पो निर्विषश्चिन्हमेव च।
अधस्तोयश्च सुस्वादु दीर्घकालं प्रवाहितम्॥ इति

अन्यदप्याह—

बिल्वोदुम्बरयोगे विहाय हस्तत्रयं तु याम्येन।
पुरुषैस्त्रिभिरम्बु भवेत् कृष्णोऽर्द्धनरे च मण्डूकः॥१८॥

बिल्व (बेल) उदुम्बर (गूलर) का जहाँ योग हो याने एकही साथ दोनों वृक्ष जहां हों वहाँ से दक्षिण ३ हाथ दूरी छोड़कर बाद में ३½ हाथ नीचे जल कहना, उसमें पहले ½ पुरुष नीचे काला मण्डूक (मेढ़क) देख पड़ेगा॥१८॥

अन्यदप्याह—

काकोदुम्बरिकायां वल्मीको दृश्यते शिरा तस्मिन्।
पुरुषत्रये सपादे पश्चिमदिक्स्था वहति सा च॥१९॥
आपाण्डुपीतिका मृद्गोरसवर्णश्च भवति पाषाणः।
पुरुषार्धे कुमुदनिभो दृष्टिपथं मूषको याति॥२०॥

काकोदुम्बरिका (काला उदुम्बर) जहाँ हो उसके समीप यदि वल्मीक देख पड़े तो उस वल्मीक में ही ३¼ पुरुष नीचे पश्चिम शिरा होती है। उसमें चिन्ह ये हैं पहले पीतवर्ण मृत्तिका, उसके नीचे शुक्ल वर्ण पाषाण (पत्थर) और उसके नीचे ½ पुरुष पर सपेद मूषक दृष्टिगोचर होगा।

अन्यदप्याह—

जलपरिहीने देशे वृक्षः कम्पिल्लको यदा दृश्यः।
प्राच्यां हस्तत्रितये वहति शिरा दक्षिणा प्रथमम्॥२१॥

मृन्नीलोत्पलवर्णा कापोता दृश्यते ततस्तस्मिन् ।
हस्तेऽजगन्धको मत्स्यकः पयोऽल्पं च सक्षारम् ॥२२॥

यदि निर्जल देश में कम्पिल्लक वृक्ष देख पड़े तो उससे पूर्व ३ हाथ के बाद ३¼ पुरुष नीचे शिरा बहती है। पहले नील कमल के वर्ण सदृश मृत्तिका बाद इसके कपोतवर्ण सदृश मिट्टी, इसके १ हाथ नीचे बकरा के गन्ध सदृश मछली देख पड़ेगी। इसके बाद थोड़ा जल कहना वह भी क्षार ( खार ) होगा ॥ २१-२२ ॥

तथा च सारस्वतः—निर्जले यत्र कम्पिल्लो दृश्यस्तस्मात् करत्रये ।
प्राच्यां त्रिभिर्नरैर्वारि सा भवेद्दक्षिणा शिरा ॥
अधो नीलोत्पलाभासा मृत् कापोतप्रभा क्रमात् ।
हस्तेऽजगन्धको मत्स्यो जलमल्पमशोभनम् ॥

अन्यदप्याह—

शोणाकतरोरपरोत्तरे शिरा द्वौ करावतिक्रम्य ।
कुमुदा नाम शिरा सा पुरुषत्रयवाहिनी भवति ॥२३॥

जल रहित देश में जहाँ पर शोणाक ( सोनापाढ़ा ) वृक्ष देख पड़े वहाँ से पश्चिम उत्तर ( वायव्य कोण ) दिशा में दो हाथ के बाद कुमुदा नाम शिरा होती है वहाँ तीन पुरुष नीचे जल रहता है ॥ २३ ॥

अन्यदप्याह—

आसन्नो वल्मीको दक्षिणपार्श्वे विभीतकस्य यदि ।
अध्यर्धे भवति शिरा पुरुषे ज्ञेया दिशि प्राच्याम् ॥२४॥

यदि विभीतक ( बहेरा ) वृक्ष के समीप दक्षिण दिशा में वल्मीक हो तो उस बहेरा के वृक्ष से पूर्व २ हाथ के बाद १½ पुरुष के नीचे शिरा रहती है वहाँ जल समझना चाहिये ॥ २४ ॥

तथा च सारस्वतः—विभीतकस्य याम्यायां वल्मीको यदि दृश्यते ।
करद्वयान्तरे पूर्वे सार्धे च पुरुषे जलम् ॥

अथान्यदप्याह—

तस्यैव पश्चिमायां दिशि वल्मीको यदा भवेद्धस्ते ।
तत्रोदग्भवति शिरा चतुर्भिरर्धाधिकैः पुरुषैः ॥२५॥

श्वेतो विश्वम्भरकः प्रथमे पुरुषे तु कुङ्कुमाभोऽश्मा ।
अपरस्यां दिशि च शिरा नश्यति वर्षत्रयेऽतीते ॥२६॥

उसी वहेरा वृक्ष के पश्चिम दिशामें यदि वल्मीक होतो उस वृक्षसे उत्तर १ हाथ छोड़कर ४½ पुरुष नीचे शिरा बहती है। वहां पर भी चिन्ह ये हैं पहले १ पुरुष खोदने पर सफेद वर्णका विश्वम्भर ( जीव विशेष ) देख पड़ेगा उसके बाद कुंकुम सदृश ( लाल ) पत्थर मिलेगा उसके बाद पश्चिम दिशामें बहती हुई शिरा होगी वह शिरा ३ वर्ष गत हो जाने पर मिट जाती है ॥२५-२६॥

अन्यदप्याह—

सकुशासित ऐशान्यां वल्मीको यत्र कोविदारस्य ।
मध्ये तयोर्नरैरर्धपञ्चमैस्तोयमक्षोभ्यम् ॥ २७ ॥
प्रथमे पुरुषे भुजगः कमलोदर सन्निभो महीरक्ता ।
कुरुविन्दः पाषाणश्चिन्हान्येतानि वाच्यानि ॥ २८ ॥

जिस भूमिपर कोविदार ( कचनार ) का वृक्ष हो यदि उस वृक्ष से ईशान कोणमें कुशा से युक्त वल्मीक सफेद रंग का होतो उस कचनार और वल्मीक के मध्य में ४½ पुरुष नीचे अक्षोभ ( कभी भी न सूखे ) जल कहना चाहिये वहां चिन्ह ये होते हैं। पहले पुरुष में कमलोदर सदृश सर्प मिलेगा उसके बाद लाल ( लोहित ) वर्ण भूमि मिलेगी, उसके बाद कुरुविन्द ( हरे रंग-का पत्थर ) होगा, इतना चिन्ह वहां कहना चाहिये ॥ २७-२८ ॥

अन्यदप्याह—

यदि भवति सप्तपर्णो वल्मीकवृक्षस्तदुत्तरे तोयम् ।
वाच्यं पुरुषैः पञ्चभिरत्रापि भवन्ति चिह्नानि ॥२९॥
पुरुषार्धे मण्डूको हरितो हरितालसन्निभा भूश्च ।
पाषाणोऽभ्रनिकाशः सौम्या च शिरा शुभाम्बुवहा ॥३०॥

यदि वल्मीक से युक्त सप्तपर्ण ( छतीवन ) वृक्ष हो तो उस वृक्ष से उत्तर १ हाथ दूरी पर पांच पुरुष नीचे जल रहता है। उसमें चिन्ह ये हैं। पहले ½ पुरुष नीचे हरितवर्ण का मेढक मिलेगा उसके बाद हरिताल सदृश भूमि मिलेगी, उसके बाद मेघ सदृश रंग का पत्थर मिलेगा उसके नीचे उत्तराशिरा होगी जिसका जल मीठा होगा ॥ २९-३० ॥

१५

तथा च सारस्वतः—

भुजङ्गगृहसंयुक्तो यत्र स्यात् सप्तपर्णकः ।
ततः सौम्ये हस्तमात्रात् पञ्चभिः पुरुषैरधः ॥
वाच्यं जलं नरार्धं तु मण्डूको हरितो भवेत् ।
हरितालनिभा भूश्च मेघाभोऽश्मा ततः शिरा ॥
उत्तरा सुजला ज्ञेया दीर्घा मृष्टाम्बुवाहिनी ।

अन्यदप्याह—

सर्वेषां वृक्षाणामधः स्थितो दर्दुरो यदा दृश्यः ।
तस्माद्धस्ते तोयं चतुर्भिरर्धाधिकैः पुरुषैः ॥३१॥
पुरुषे तु भवति नकुलो नीला मृत् पीतिका ततः श्वेता ।
दर्दुरसमानरूपः पाषाणो दृश्यते चाऽत्र ॥३२॥

सभी वृक्षों में जिसके नीचे दर्दुर ( मेढक ) हो, उस वृक्ष के उत्तर दिशा में १ हाथ दूरी पर ४½ पुरुष नीचे जल रहता है। वहां पर चिन्ह ये हैं एक पुरुष खोदने से नकुल ( नवला—नेउर ) मिलेगा उसके वाद नीली मिट्टी, उसके वाद सपेद मिट्टी उसके वाद दर्दुर ( मेढक ) सदृश पत्थर मिलेगा उसके नीचे जल होगा॥ ३१-३२ ॥

तथा च सारस्वतः—

तरुणां यत्र सर्वेषामधस्थो दर्दुरो भवेत् ।
वृक्षादुदग्दिशि जलं हस्तात् सार्धैर्नरैरधः ॥
चतुर्भिः पुरुषे खाते नकुलो नीलमृत्तिका ।
पीतश्वेता ततो भेकसदृशोऽश्मा प्रदृश्यते ॥

अन्यदप्याह—

यद्यहिनिलयो दृश्यो दक्षिणतः संस्थितः करञ्जस्य ।
हस्तद्वये तु याम्ये पुरुषत्रितये शिरा सार्धे ॥३३॥
कच्छपकः पुरुषार्द्धे प्रथमं चोद्भिद्यते शिरा पूर्वा ।
उदगन्या स्वादुजला हरितोऽश्माधस्ततस्तोयम् ॥३४॥

यदि करञ्ज वृक्ष के दक्षिण दिशा में सर्पावास का वल्मीक दीख पड़े तो करञ्ज वृक्ष से दक्षिण दिशा में २ हाथ दूरी के वाद ३½ पुरुष नीचे शिरा रहती है उसके चिन्ह ये हैं। पहले ½ पुरुष खोदने पर कच्छप ( कछुआ ) मिलेगा।

उसके वाद पहले पूर्वाशिरा ( पूर्वाभिमुख जल बहता हुआ ) देख पड़ेगा दूसरा उत्तरा शिरा मीठा जलवाला मिलेगा उसके नीचे हरे रंग का पत्थर मिलेगा उसके वाद जल मिलेगा ॥ ३३-३४ ॥

अन्यदप्याह—

**उत्तरतश्च मधूकादहिनिलयः पश्चिमे तरोस्तोयम् ।**
**परिहृत्य पञ्च हस्तानर्धाष्टमपौरुषान् प्रथमम् ॥ ३५ ॥**
**अहिराजः पुरुषेऽस्मिन् धूम्रा धात्री कुलुत्थवर्णोऽश्मा ।**
**माहेन्द्री भवति शिरा वहति सफेनं सदा तोयम् ॥३६॥**

मधूक ( महुआ ) वृक्ष से उत्तर दिशा में यदि सर्पका वल्मीक देख पड़े तो मधूक वृक्ष से पश्चिम ५ हाथ दूरी के वाद ७ ½ पुरुष नीचे जल रहता है पहले १ पुरुष नीचे सर्पराज मिलेगें उसके नीचे धूम्र ( रक्त श्याम ) वर्ण भूमि होगी उसके नीचे कुलुत्थ वर्ण का पत्थर मिलेगा वहां पर माहेन्द्री नाम पूर्वा शिरा होती है उसमें सर्वदा फेन युक्त जल बहता है ॥ ३५-३६ ॥

अन्यदप्याह—

**वल्मीकः स्निग्धो दक्षिणेन तिलकस्य सकुशदूर्वश्चेत् ।**
**पुरुषैः पञ्चभिरम्भो दिशि वारुण्यां शिरा पूर्वा ॥ ३७ ॥**

यदि तिलक वृक्ष से दक्षिण उत्तम वल्मीक हो वहां पर कुशा और दूर्वा लगी हो तो तिलक वृक्ष से पश्चिम ५ हाथ के बाद पांच पुरुष नीचे जल रहता है वहां पूर्वाशिरा है ॥ ३७ ॥

तथा च सारस्वतः—

तिलकाद्दक्षिणे स्निग्धः कुशदूर्वासमायुतः ।
वल्मीकाच्चोत्तरे पञ्च हस्तात् सन्त्यज्य पश्चिमे
नरः पञ्चभिरम्भोऽधः शिरा पूर्वात्र विद्यते ॥

अन्यदप्याह—

**सर्पावासः पश्चाद्यदा कदम्बस्य दक्षिणेन जलम् ।**
**परतो हस्तत्रितयात् षड्भिः पुरुषैस्तुरी[illegible]ः ॥३८॥**
**कौवेरी चात्र शिरा वहति जलं लोहगं [illegible]स्यम् ।**
**कनकनिभो मण्डूको नरमात्रे मृत्तिसन्[illegible]का पीता ॥ ३९ ॥**

यदि कदम्ब वृक्ष से पश्चिम दिशामें सर्पावास वल्मीक हो तो दक्षिण दिशामें ३ हाथ दूरी के वाद ५ $\frac{१}{२}$ पुरुष नीचे जल वहता है ॥ वहां उत्तरा शिरा होती है लोहेके गन्ध सदृश अत्यन्त जल वहता है उसमें चिन्ह ये हैं पहले एक पुरुष नीचे खोदने से सुवर्ण सदृश माण्डूक ( मेढ़क ) मिलता है और पीत वर्ण की मिट्टी रहती है ॥ ३८-३९ ॥

अन्यदप्याह—

वल्मीकसंवृतो यदि तालो वा भवति नालिकेरो वा ।
पश्चात् षड्भिर्हस्तैर्नरैश्चतुर्भिः शिरा याम्या ॥ ४० ॥

ताल वृक्ष या नालिकेर ( नारियल ) का वृक्ष यदि वल्मीक से युक्त हो तो उस ताल और नारियल वृक्ष से पश्चिम दिशामें ६ हाथ के वाद ४ पुरुष नीचे दक्षिणा शिरा वहती है ॥ ४० ॥

अन्यदप्याह—

याम्येन कपित्थस्याहिसंश्रयश्चेदुदग्जलं वाच्यम् ।
सप्त परित्यज्य करान् खात्वा पुरुषान् जलं पञ्च ॥४१॥
कर्बुरकोऽहिः पुरुषे कृष्णा मृत् पुटभिदपि च पाषाणः।
श्वेता मृत् पश्चिमतः शिरा ततश्चोत्तरा भवति ॥४२॥

यदि कपित्थ ( कईत ) वृक्ष से दक्षिण दिशामें सर्पावास वल्मीक हो तो उस कपित्थ वृक्ष से उत्तर ७ हाथ परित्याग करके पांच पुरुष नीचे जल कहना, उसमें चिन्ह ये हैं पहले १ पुरुष खोदने पर कर्वुर ( चित्र ) वर्ण का सर्प होगा और काली २ मिट्टी होगी उसके वाद पुटभेदी पत्थर होगा वाद श्वेत मृत्तिका वहां ही पश्चिमा शिरा १ होगी उसके वाद उत्तरा शिरा भी होगी ४१-४२

अन्यदप्याह—

अश्मन्तकस्य वामे वदरी वा दृश्यतेऽहिनिलयो वा ।
षड्भिरुदक् तस्य करैः सार्धे पुरुषत्रये तोयम् ॥ ४३ ॥
कूर्मः प्रथमे पुरुषे पुषाणो धूसरः ससिकता मृत् ।
आदौ [illegible] शिरा [illegible] पूर्वोत्तरतो द्वितीया च ॥ ४४ ॥

अश्मन्तक वृक्षके वा[illegible] उत्तर दिशामें वदरीवृक्ष हो वा सर्पावास वल्मीक हो तो उस अश्मन्तक वृक्ष [illegible] से उत्तर दिशामें ६ हाथ के वाद ३½ पुरुष

नीचे जल होता है वहां चिह्न ये हैं, १ पुरुष खोदने से कूर्म ( कछुआ ) देख पड़ेगा उसके बाद धूसर ( काला-सफेद ) वर्णका पत्थर होगा उसके नीचे बालुकायुक्त मिट्टी बाद पहले दक्षिण शिरा होगी उसके बाद दूसरा पूर्वोत्तरा ( ऐशानी ) शिरा होती है ॥ ४३-४४ ॥

अन्यदप्याह—

वामेन हरिद्रतरोर्वल्मीकश्चेज्जलं भवति पूर्वे ।
हस्तात्रितये सत्र्यंशैः पुम्भिः पञ्चभिर्भवति ॥ ४५ ॥
नीलो भुजगः पुरुषे मृत् पीता मरकतोपमश्चाश्मा ।
कृष्णा भूः प्रथमं वारुणी शिरा दक्षिणेनान्या ॥४६॥

हरिद्रा वृक्षके उत्तर भाग में यदि वल्मीक देख पड़े तो हरिद्रा वृक्ष से पूर्व दिशा में ३ हाथ के बाद ५ ⅓ पुरुष नीचे जल रहता है। वहां पर भी पहले १ पुरुष नीचे नील सर्प देख पड़ेगा बाद उसके नीचे पीली मिट्टी उसके बाद मर्कत सदृश पत्थर मिलेगा बाद काली भूमि वहां वारुणी (पश्चिमा) शिरा पहले होगी दुसरी दक्षिणा शिरा होगी ॥ ४५-४६ ॥

अन्यदप्याह—

जलपरिहीने देशे दृश्यन्तेऽनूपजानि चेन्निमित्तानि ।
वीरणदूर्वा मृदवश्च यत्र तस्मिन् जलं पुरुषे ॥ ४७ ॥
भार्ङ्गी त्रिवृता दन्ती सूकरपादी च लक्ष्मणा चैव ।
नवमालिका च हस्तद्वयेऽम्बु याम्ये त्रिभिः पुरुषैः ॥४८॥

जल रहित देश में जहां पर नीचे लिखे चिन्ह देख पड़ें वहां वहुत जल कहना चाहिये याने जहां पर जल रहता है उसके ऊपर वीरण तृण विशेष और दूर्वा होती है वहां की भूमि अति कोमल होती है उस भूमि पर १ पुरुष नीचे जल रहता है ॥ भार्ङ्गी ( ब्रह्मदण्डी ) त्रिवृता ( त्रिधारा ) दन्ती ( वज्रदन्ती ) सूकरपादी ( केवाँच ) लक्ष्मणा नवमालिका ( नेवारी ) वृक्ष ये सव वृक्ष जहां हो उससे दक्षिण २ हाथ के वाद ३ पुरुष नीचे जल रहता है ॥ ४७-४८ ॥

अन्यदप्याह—

स्निग्धाः प्रलम्बशाखा वामनाविकटद्रुमाः समीपजलाः ।
सुषिरा जर्जरपत्रा रूक्षाश्च जलेन सन्त्यक्ताः ॥ ४९ ॥

जो वृक्ष स्निग्ध ( चिकना ) प्रलम्ब शाखा ( फैली हुई लताओंसे युक्त ) वामन ( अत्यन्त छोटा ) विकट ( विस्तीर्ण ) हों उनके समीप में जल रहता है तथा जो वृक्ष सुषिर ( अन्तः सार, ) जर्जर ( फटा हुआ ) पत्र तथा रूक्ष ( रूखर ) हैं उनके समीप जल नहीं रहता है ॥ ४९ ॥

अन्यदप्याह—

तिलकाम्रातकवरुणकभल्लातकविल्वतिन्दुकाङ्कोलाः ।
पिण्डारशिरीषाञ्जनपरूषका वञ्जुलोऽतिबला ॥ ५० ॥
एते यदि सुस्निग्धा वल्मीकैः परिवृतास्ततस्तोयम् ।
हस्तैस्त्रिभिरुत्तरतश्चतुर्भिरर्धेन च नरेण ॥ ५१ ॥

तिलक वृक्ष अम्रातक ( अमड़ा ) वरुणक वृक्ष भल्लातक ( भिलावा ) विल्व, तिन्दुक ( तेन्दुआ ), अङ्कोल, पिण्डार, शिरीष, अञ्जन वृक्ष, परुषक वृक्ष वञ्जुल और अतिवला, ये वृक्ष यदि सुस्निग्ध वल्मीक करके युक्त हों तो इन तिलकादि वृक्षों से उत्तर दिशा में ३ हाथ के वाद ४½ पुरुष नीचे जल कहना चाहिये ॥ ५०-५१ ॥

अन्यदप्याह--

अतृणे सतृणा यस्मिन् सतृणे तृणवर्जिता मही यत्र ।
तस्मिन् शिरा प्रदिष्टा वक्तव्यं वा धनं चास्मिन् ॥५२॥

तृण रहित भूमि पर जहां तृण हो अथवा तृण सहित भूमि पर जहां तृण न हो उस स्थान के नीचे शिरा कहना, वहां जल रहता है अथवा उस स्थान में धन रहता है । किसी के मत से ४½ पुरुष नीचे रहता है, यह अनुवर्तन किया गया है ॥ ५२ ॥

अन्यदप्याह----

कण्टक्यकण्टकानां व्यत्यासेऽम्भस्त्रिभिः करैः पश्चात् ।
खात्वा पुरुषत्रितयं त्रिभागयुक्तं धनं वा स्यात् ॥५३॥

जहां पर कण्टकी वृक्ष ( खैरा आदि ) अकण्टक ( पलासादि ) वृक्ष के मध्य में हो अथवा विपरीत हो याने कण्टकी वृक्ष के मध्य अकण्टक वृक्ष हो तो उस वृक्ष से पश्चिम दिशा में ३ हाथ के वाद ३⅓ पुरुष खोदने से उसके नीचे जल अथवा धन रहता है ॥ ५३ ॥

अन्यदप्याह—

नदति मही गम्भीरं यस्मिंश्चरणाहता जलं तस्मिन् ।
सार्धैस्त्रिभिर्मनुष्यैः कौवेरी तत्र च शिरा स्यात् ॥५४॥

जिस स्थान पर भूमि को पाद ( चरण ) से आहत ( मारण ) करने से गम्भीर ( मधुर ) शब्द करे उसी स्थान में ३½ पुरुष नीचे उत्तरा शिरा वहती है, वहां जल रहता है ॥ ५४ ॥

अन्यदप्याह—

वृक्षस्यैका शाखा यदि विनता भवति पाण्डुरा वा स्यात् ।
विज्ञातव्यं शाखातले जलं त्रिपुरुषं खात्वा ॥५५॥

जिस किसी वृक्ष की शाखा यदि नम्र होकर पाण्डु ( विवर्ण ) हो जावे तो उसी शाखा के नीचे ३ पुरुष खोदना उसके नीचे जल जानना चाहिये ॥५५॥

अन्यदप्याह—

फलकुसुमविकारो यस्य तस्य पूर्वे शिरा त्रिभिर्हस्तैः ।
भवति पुरुषैश्चतुर्भिः पाषाणोऽधः क्षितिः पीता ॥५६॥

जिस वृक्ष के फल फूल में विकार पैदा होजाय उस वृक्ष के पूर्व दिशा में ३ हाथ दूरी के वाद ४ पुरुष नीचे शिरा होती है तथा नीचे पाषाण ( पत्थर ) और पीत भूमि होगी ॥ ५६ ॥

अन्यदप्याह—

यदि कण्टकारिका कण्टकैर्विना दृश्यते सितैः कुसुमैः ।
तस्यास्तलेऽम्बु वाच्यं त्रिभिर्नरैरर्धपुरुषे च ॥५७॥

यदि कण्टकारिका ( भटकटैया रेंगनी ) कांटे से रहित हो उसके पुष्प सफेद हो तो उसके नीचे ३½ पुरुष पर जल कहना चाहिये ॥ ५७ ॥

खर्जूरी द्विशिरस्का यत्र भवेज्जलविवर्जिते देशे ।
तस्याः पश्चिमभागे निर्देश्यं त्रिपुरुषैर्वारि ॥ ५८ ॥

जिस निर्जल देशमें दो शिर का खर्जूर ( खजूर ) वृक्ष हो उस खर्जूर वृक्ष के पश्चिम भाग में २ हाथ के वाद ३ पुरुष नीचे खोदने से जल कहना ॥५८॥

तथा च सारस्वतः—

खर्जूरी द्विशिरस्का स्यान्निर्जले चेत् करद्वये ।
निर्देश्यं पश्चिमे वारि खात्वाऽधः पुरुषत्रयम् ॥

अन्यदप्याह—

यदि भवति कर्णिकारः सितकुसुमः स्यात् पलाशवृक्षो वा ।
सव्येन तत्र हस्तद्वयेऽम्बु पुरुषद्वये भवति ॥ ५९ ॥

कर्णिकार ( कठचम्पा ) पुष्प का वृक्ष अथवा पलाश का वृक्ष जहां पर श्वेत पुष्प युक्त हो उस स्थान में कर्णिकार और पलाश वृक्ष से दक्षिण २ हाथ दूरी के बाद २ पुरुष नीचे जल होता है ॥ ५६ ॥

अन्यदप्याह—

यस्यामूष्मा धात्र्यां धूमो वा तत्र वारि नरयुगले ।
निर्देष्टव्या च शिरा महता तोयप्रवाहेण ॥ ६० ॥

जिस भूमि पर उष्मा ( गरमी ) देख पड़े या जहां पर धूम देख पड़े वहां पर २ पुरुष नीचे बहुत बड़ा जल प्रवाह से युक्त शिरा कहना चाहिये॥६०॥

अन्यदप्याह—

यस्मिन् क्षेत्रोद्देशे जातं सस्यं विनाशमुपयाति ।
स्निग्धमति पाण्डुरं वा महाशिरा नरयुगे तत्र ॥ ६१ ॥

जिस भूमि पर उत्पन्न सस्य ( अन्न-घास ) नाश होजाता हो अथवा जिस भूमि पर स्निग्ध सस्य ज्यादा होता हो अथवा अत्यन्त पीत वर्ण पत्ते हो जावें, उस भूमि पर २ पुरुष नीचे महाशिरा होती है वहां विशेष जलप्रवाह रहता है ॥ ६१ ॥

एवं जाङ्गलानूपभूम्योर्जलपरिज्ञानमभिधाय अधुना मरुभूमौ शिराविज्ञानं कथयामीत्याह—

मरुदेशे भवति शिरा यथा तथातः परं प्रवक्ष्यामि ।
ग्रीवा करभाणामिव भूतलसंस्थाः शिरा यान्ति ॥६२॥

पृथ्वी का जो भाग जल से रहित हो उसको मरुभूमि कहते हैं । उस मरुभूमि में शिराज्ञान जिस प्रकार हो, उसको कहता हूं । करभ ( उष्ट्र ) का ग्रीवा जिस प्रकार कुटिल होता है उसी प्रकार शिरा भी भूतल संस्था ( पृथ्वीतल में ) अर्थात् बहुत नीचे होती है ॥ ६२ ॥

तत्राह—

पूर्वोत्तरेण पीलोर्यदि वल्मीको जलं भवति पश्चात् ।
उत्तरगमना च शिरा विज्ञेया पञ्चभिः पुरुषैः ॥ ६३ ॥
चिन्हं दर्दुर आदौ मृत् कपिला तत्परं भवेद्धरिता ।
भवति च पुरुषेऽधोऽश्मा तस्य तलेऽम्भो विनिर्देश्यम् ॥६४॥

यदि पीलू ( अखरोट मेवा ) वृक्ष के ईशान कोण में वल्मीक कृत मिट्टी समूह हो तो उस पीलू वृक्ष से पश्चिम ४½ हाथ के बाद ५ पुरुष नीचे जल होता है वहां उत्तर दिशा में वहने वाली शिरा होती है जिसके चिन्ह ये हैं ।

पहले १ पुरुष खोदने से मण्डूक ( मेढक ) का चिन्ह होगा उसके नीचे कपिला मिट्टी होगी, उसके नीचे हरित वर्ण भूमि होगी इन चिन्हों के बाद पत्थर होगा उस पत्थर के नीचे जल कहना चाहिये ॥ ६३-६४ ॥

तथा च सारस्वतः—

ऐशान्यां पीलुवृक्षस्य वल्मीकश्चोज्जलं वदेत् ।
चतुर्भिः सरलैर्हस्तैः पश्चिमे नरपञ्चमे ॥
प्रथमे पुरुषे भेकः कपिला हरिता च मृत् ।
पाषाणस्य तले सौम्यां शिरां बहुजलां वदेत् ॥

अन्यदप्याह—

पीलोरेव प्राच्यां वल्मीकोऽतोऽर्धपञ्चमैर्हस्तैः ।
दिशि याम्यायां तोयं वक्तव्यं सप्तभिः पुरुषैः ॥६५॥
प्रथमे पुरुषे भुजगः सितासितो हस्तमात्रमूर्त्तिश्च ।
दक्षिणतो वहति शिरा सक्षारं भूरि पानीयम् ॥६६॥

यदि पीलू ( अखरोट मेवा ) वृक्ष से पश्चिम वल्मीक देख पड़े तो उस पीलू वृक्ष से दक्षिण दिशा में ४½ हाथ के बाद ७ पुरुष नीचे जल कहना चाहिए । वहां चिन्ह ये हैं पहले १ पुरुष खोदने से सफेद और काला वर्ण का १ हाथ की सर्पमूर्ति देख पड़ेगी ( यहां मूर्ति शब्द कहने से सर्प का आकार समझना चाहिये ) । बाद दक्षिण दिशा में शिरा होगी जिसमें बहुतक्षार जल बहता है ॥ ६६ ॥

अन्यदप्याह—

उत्तरतश्च करीरस्याहिगृहं दक्षिणे जलं स्वादु ।
दशभिः पुरुषैर्ज्ञेयं पुरुषे पीतोऽत्र मण्डूकः ॥ ६७ ॥

यदि करीर वृक्ष से उत्तर दिशा में सर्प गृह का वल्मीक देख पड़े तो उस करीर वृक्ष से दक्षिण दिशा में ४½ हाथ के बाद १० पुरुष नीचे स्वादु ( मीठा ) जल जानना चाहिये वहां भी १ पुरुष खोदने से पीत वर्ण का मण्डूक ( मेढक ) देख पड़ेगा ॥ ६७ ॥

तथा च सारस्वतः—

उदक्करीराद्वल्मीको दृश्यते चेज्जलं वदेत् ।
चतुर्भिर्दक्षिणैर्हस्तैः सार्धैर्दशनरादतः ॥
नरे भेकः पीतवर्णो दृश्यते चिन्हमत्र हि ॥

अन्यदप्याह—

रोहीतकस्य पश्चादहिवासश्चेत्त्रिभिः करैर्याम्ये ।
द्वादश पुरुषान् खात्वा सक्षारा पश्चिमेन शिरा ॥६८॥

रोहितक वृक्ष से पश्चिम यदि सर्पावास का वल्मीक देख पड़े तो रोहितक वृक्ष से दक्षिण दिशा में ३ हाथ के बाद १२ पुरुष नीचे खोदने से उसके नीचे क्षार जल का शिरा पश्चिमाभिमुख बहती हुई मिलेगी ॥ ६८ ॥

अन्यदप्याह—

इन्द्रतरोर्वल्मीकः प्राग्दृश्यः पश्चिमे शिरा हस्ते ।
खात्वा चतुर्दश नरान् कपिला गोधा नरे प्रथमे ॥६९॥

इन्द्रतरु ( अर्जुन वृक्ष ) से पूर्व दिशा में यदि वल्मीक देख पड़े तो उस इन्द्रतरु से पश्चिम दिशा में १ हाथ के बाद १४ पुरुष खोदने से उसके नीचे शिरा होती है वह नीचे को बहती है उसमें भी पहले पुरुष खोदने से कपिलवर्ण की गोधा ( गोहिआ ) देख पड़ेगी ॥ ६९ ॥

अन्यदप्याह—

यदि वा सुवर्णनाम्नस्तरोर्भवेद्वामतो भुजङ्गगृहम् ।
हस्तद्वये तु याम्ये पञ्चदशनरावसानेऽम्बु ॥ ७० ॥
क्षारं पयोऽत्र नकुलोऽर्धमानवे ताम्रसन्निभश्चाश्मा ।
रक्ता च भवति वसुधा वहति शिरा दक्षिणा तत्र ॥७१॥

यदि सुवर्ण ( अमलतास ) वृक्षके वामभाग ( उत्तर दिशा ) में सर्पावासका वल्मीक देख पड़े तो उस वृक्ष से दक्षिण दिशामें २ हाथ के बाद १५ पुरुष खोदने से उसके नीचे जल होता है, वहां क्षारजल जानना चाहिये, जिसमें

पहले ३ पुरुष नीचे नकुल एवं ताम्बेरंग का पत्थर और रक्त ( लाल ) वर्णकी भूमि होगी वहां दक्षिण शिरा वहती है ॥

अन्यदप्याह—

वदरीरोहितवृक्षौ सम्पृक्तौ चेद्विनापि वल्मीकम् ।
हस्तत्रयेऽम्बु पश्चात् षोड़शभिर्मानवैर्भवति ॥ ७२ ॥
सुरसं जलमादौ दक्षिणा शिरा वहति चोत्तरेणान्या ।
पिष्टनिभः पाषाणो मृत् श्वेता वृश्चिकोऽर्धनरे ॥ ७३ ॥

जहां पर वदरी ( वैर ) रोहित वृक्ष मिले हुये हों वल्मीक हो या न हो तो उन वृक्षों से पश्चिम दिशामें ३ हाथ के वाद १६ पुरुष नीचे जल होता है यहां सुरस ( मीठा ) जल होगा प्रथमा शिरा दक्षिणाभिमुख और दुसरा शिरा उत्तराभिमुख होगी वहां पिष्ट ( धानका चूर्ण ) सदृश रंग का पत्थर सपेद मृत्तिका होगी आधे पुरुष खोदने से वृश्चिक ( विच्छू ) देख पड़ेगी ॥

अन्यदप्याह—

सकरीरा चेद्वदरी त्रिभिः करैः पश्चिमेन तत्राम्भः ।
अष्टादशभिः पुरुषैरैशानी वहुजला च शिरा ॥ ७४ ॥

यदि वदरी ( वैर ) वृक्ष करीर वृक्ष के साथ देख पड़े तो उस वृक्ष से पश्चिम ३ हाथ दूरी के वाद १८ पुरुष नीचे खोदने से जल रहता है वहां ईशान कोण में विशेष जल से युक्त शिरा वहती है ॥ ७४ ॥

अन्यदप्याह—

पीलुसमेता वदरी हस्तत्रयसम्मिते दिशि प्राच्याम् ।
विंशत्या पुरुषाणामशोष्यमम्भोऽत्र सक्षारम् ॥ ७५ ॥

पीलू ( अखरोट ) वृक्ष के युक्त वदरी ( वैर ) यदि देख पड़े तो उस वृक्ष से पूर्व दिशामें ३ हाथ दूरी के वाद २० पुरुष नीचे अशोष्य ( कभी नहीं सूखने वाला ) प्रभूत ( वहुत ) जल रहता है वह क्षार होता है ॥ ७५ ॥

ककुभकरीरावेकत्र संयुतौ यत्र ककुभविल्वौ वा ॥
हस्तद्वयेऽम्बु पश्चान्नरैर्भवेत् पञ्चविंशत्या ॥ ७६ ॥

जिस भूमिपर ककुभ ( अर्जुन ) वृक्ष और करीर वृक्ष एक साथ देख पड़े अथवा जहां पर ककुभ और विल्व वृक्ष एक साथ हो तो उस वृक्ष से पश्चिम दिशामें २ हाथ के वाद २५ पुरुष नीचे जल कहना चाहिये ॥ ७६ ॥

अन्यदप्याह—

वल्मीकमूर्धनि यदा दूर्वा च कुशाश्च पाण्डुराः सन्ति ।
कूपो मध्ये देयो जलमत्र नरैकविंशत्या ॥ ७७ ॥

यदि वल्मीक के ऊपर दूर्वा वा कुशा पाण्डुर वर्ण का हो तो वल्मीक के ऊपर मध्यमें ही कूप खोदना इस स्थान में २१ पुरुष नीचे जल रहता है ॥ ७७ ॥

अन्यदप्याह—

भूमिः कदम्बक युता वल्मीके यत्र दृश्यते दूर्वा ।
हस्तद्वयेन याम्ये नरैर्जलं पञ्चविंशत्या ॥ ७८ ॥

जिस स्थान की भूमि कदम्ब वृक्ष से युक्त हो और वहां ही वल्मीक से युक्त दूर्वा देख पड़े तो उस कदम्ब वृक्ष से दक्षिण दिशा में दो २ हाथ के बाद २५ पुरुष नीचे जल रहता है ॥ ७ ॥

अन्यदप्याह—

वल्मीकत्रयमध्ये रोहीतकपादपो यदा भवति ।
नानावृक्षैः सहितस्त्रिभिर्जलं तत्र वक्तव्यम् ॥ ५७ ॥
हस्तचतुष्के मध्यात् षोड़शभिश्चाङ्गुलैरुदग्वारि ।
चत्वारिंशत् पुरुषान् खात्वाऽश्माऽधः शिरा भवति ॥८०॥

यदि तीन वल्मीक के मध्य में रोहितक वृक्ष हो और वह वृक्ष विजातीय तीन से अधिक वृक्षों के सहित हो तो उस स्थान में जल कहना वल्मीकत्रय के मध्य में जो रोहितक वृक्ष है उस से उत्तर दिशा में ४ हाथ १६ अङ्गुल के बाद ४० पुरुष नीचे खोदने से पत्थर देख पड़ेगा उसके नीचे शिरा रहती है ॥

अन्यदप्याह—

ग्रन्थिप्रचुरा यस्मिन् शमी भवेदुत्तरेण वल्मीकः ।
पश्चात् पञ्चकरान्ते शतार्धसङ्ख्यैर्नरैः सलिलम् ॥८१॥

जिस भूमि पर ग्रन्थि प्रचुर से युक्त शमी वृक्ष हो उसके उत्तर यदि वल्मीक हो तो शमी वृक्ष से पश्चिम ५ हाथ दूरीके बाद ५० पुरुष नीचे सलिल ( जल ) होता है ॥ ८१ ॥

अन्यदप्याह—

एकस्थाः पञ्च यदा वल्मीका मध्यमो भवेच्छ्वेतः ।
तास्मिन् शिरा प्रदिष्टा नर षष्ट्या पञ्चवर्जि तया ॥८२॥

यदि एक स्थान में ५ वल्मीक हो तो उनमें पांचवाँ मध्य होता है वह मध्यस्थ पांचवाँ वल्मीक यदि श्वेत वर्ण का हो तो उस मध्य वल्मीक में शिरा कहना वह शिरा ५५ पुरुष नीचे होती है।

अन्यदप्याह—

सपलाशा यत्र शमी पश्चिमभागेऽम्बु मानवैः षष्ट्या ।
अर्धनरेऽहिः प्रथमं सवालुका पीतमृत् परतः ॥८३॥

जिस प्रदेश में पलाश वृक्ष से युक्त शमी वृक्ष हो तो उस शमी वृक्ष से पश्चिम दिशा में ५ हाथ के वाद ६० पुरुष नीचे जल रहता है जिसमें पहले ½ पुरुष खोदने से सर्प रहता है उसके वाद वालुका सहित पीत ( पीली ) वर्ण मृत्तिका होती है।

तथा च सारस्वतः—

शमी पलाशसंयुक्ता यत्र स्यात्तत्र पश्चिमे ।
पञ्चहस्ताज्जलं वाच्यं षष्ट्यात्र पुरुषैरधः ॥
अत्रार्धपुरुषे सर्पः पीता मृत्स्यात् सवालुका ।
तदधोऽम्भो विनिर्दिश्यं दीर्घकालं प्रवाहितम् ॥

अन्यदप्याह—

वल्मीकेन परिवृतः श्वेतो रोहीतको भवेद्यस्मिन् ।
पूर्वेण हस्तमात्रे सप्तत्या मानवैरम्बु ॥८४॥

जिस प्रदेश में श्वेत ( सपेद ) रोहितक वृक्ष वल्मीक करके युक्त हो, उस प्रदेश में रोहितक वृक्ष से पूर्व दिशा में १ हाथ के वाद ७० पुरुष नीचे जल रहता है ॥ ८४ ॥

अन्यदप्याह—

श्वेता कण्टकबहुला यत्र शमी दक्षिणेन तत्र पयः ।
नरपञ्चकसंयुतया सप्तत्याहिर्नरार्धे च ॥ ८५ ॥

जिस प्रदेश में शुक्ल वर्ण का और वहुत कण्टक ( कांटा ) से युक्त शमी वृक्ष हो वहां उस शमी वृक्ष से दक्षिण १ हाथ के वाद ७५ पुरुष नीचे जल रहता है जिस में ½ पुरुष पहले खोदने से सर्प होगा ॥ ८५ ॥

तथा च सारस्वतः—

श्वेतातिकण्टका यत्र शमीस्यात्तत्र दक्षिणे ।
हस्तेन पञ्चसप्तत्या नराणां निर्दिशेज्जलम् ॥

खातेऽर्धपुरुषे सर्पो दृश्यतेऽञ्जनसप्रभः ।
सुरसं च जलं ज्ञेयं चिरकालप्रवाहितम् ॥

अत्रैव विशेषान्तरमाह—

मरुदेशे यच्चिन्हं न जाङ्गले तैर्जलं विनिर्देश्यम् ।
जम्बूवेतसपूर्वैर्ये पुरुषास्ते मरौ द्विगुणाः ॥ ८६ ॥

जो लक्षण मरु देश में कहा है, उन लक्षण और चिन्हों से जाङ्गल ( स्वल्पोदक ) देश में जल नहीं कहना चाहिये । जैसे "वेतसोऽम्बुरहिते देशे" तथा "जम्ब्वाश्चोदग्घस्ते" जम्बू, वेतस द्वारा जो पूर्व लक्षण कहा है, उन्हीं चिन्हों को मरु देश में देखने से कहे हुये के द्विगुणित नीचे जल कहना चाहिये८६।

अन्यदप्याह—

जम्बूस्त्रिवृता मौर्वी शिशुमारी सारिवा शिवा श्यामा ।
वीरुधयो वाराही ज्योतिष्मती गरुड़वेगा च ॥ ८७ ॥
सूकरिकमाषपर्णीव्याघ्रपदाश्चेति यद्यहेर्निलये ।
वल्मीकादुत्तरतस्त्रिभिः करैस्त्रिपुरुषे तोयम् ॥८८॥

जम्बू वृक्ष, त्रिवृता ( त्रिधारा या निसोत ), मौर्वी ( मूर्वा ), शिशुमारी, सारिवा (सरिवन), शिवा ( शमी या हर्रे ), श्यामा ये औषधियां तथा वाराही ( कन्दविशेष ), ज्योतिष्मती ( मालकंगुनी ), गरुणवेगा सूकरिक माषपर्णी ( प्रसिद्ध ), व्याघ्रपदा, ये औषधियां जिस स्थान पर सर्पावास वल्मीक से युक्त हो वहां वल्मीक से उत्तर दिशा में ३ हाथ के बाद ३ पुरुष खोदने से उसके नीचे जल कहना चाहिये ॥ ८७-८८ ॥

किं सर्वत्र न इत्याह—

एतदनूपे वाच्यं जाङ्गलभूमौ तु पञ्चभिः पुरुषैः ।
एतैरेव निमित्तैर्मरुदेशे सप्तभिः कथयेत् ॥ ८९ ॥

यह जो मैंने कहा, सो बहूदक ( बहुत जल वाले ) भूमि में कहना । यह लक्षण जाङ्गल ( थोड़े जल वाले ) भूमि में ५ पुरुष पर कहना और यही पूर्वोक्त चिन्ह से मरु ( निर्जल ) भूमि में ७ पुरुष नीचे जल कहना चाहिये ।८९।

अन्यदप्याह—

एकनिभा यत्र मही तृणतरुवल्मीकगुल्मपरिहीना ।
तस्यां यत्र विकारो भवति धरित्र्यां जलं तत्र ॥९०॥

जो भूमि जहां पर एक रंग की हो और तृण, वृक्ष, वल्मीक, गुल्म (लता) से हीन हो, उस भूमि में जहां पर विकार पैदा हो याने अन्य सदृश हो जाय उस भूमि पर १५ पुरुष नीचे जल कहना चाहिये ।। ९० ।।

तथा च सारस्वतः—

एकवर्णा मही यत्र वृक्षगुल्मतृणादिभिः ।
वल्मीकैश्चापि रहिता तस्यां तत्र विपर्ययः ॥
पञ्चभिः पुरुषैस्तत्र जलं भूमावधः स्थितम् ।

अन्यदप्याह—

**यत्र स्निग्धा निम्ना सवालुका सानुनादिनी वा स्यात् ।**
**तत्रार्धपञ्चकैर्वारि मानवैः पञ्चभिर्यदि वा ॥ ९१ ॥**

जिस स्थान की भूमि स्निग्ध ( चिकनी ) नीची वालुका युक्त और शब्द युक्त हो उस स्थान में ४½ अथवा ५ पुरुष नीचे जल कहना चाहिये ॥ ९१ ॥

अन्यदप्याह—

**स्निग्धतरुणां याम्ये नरैश्चतुर्भिर्जलं प्रभूतं च ।**
**तरुगहनेऽपि हि विकृतो यस्तस्मात् तद्वदेव वदेत् ॥९२॥**

जिस भूमिपर स्निग्ध वृक्ष वहुत से होते है उनमें उन स्निग्ध वृक्षों से दक्षिण दिशा में ४ पुरुष नीचे वहुत जल होता है, उन स्निग्ध वृक्ष समूहों में भी जिस वृक्षके फल पुष्पमें विकार ( अन्य सदृश ) पैदा होजाय उस वृक्ष से भी दक्षिण दिशा में ४ पुरुष नीचे जल कहना चाहिये ।। ९२ ।।

अन्यदप्याह—

**नमते यत्र धरित्री सार्धे पुरुषेऽम्बु जाङ्गलानूपे ।**
**कीटा वा यत्र विनालयेन वहवोऽम्बु तत्रापि ॥९३॥**

जिस प्रदेश की भूमि पादाहत ( पैर से दवाने ) से नम्र हो जाय याने नीचे को जाय वह जाङ्गल भूमि हो या वह्वदक भूमि हो वहां १½ पुरुष नीचे जल होता है, एवं कीट या कृमी जहां पर गृह विना ही वास करें वहां भी १½ पुरुष नीचे वहुत जल कहना चहिये ।। ९३ ।।

अन्यदप्याह—

**उष्णा शीता च मही शीतोष्णाम्भस्त्रिभिर्नरैः सार्धैः ।**
**इन्द्रधनुर्मत्स्यो वा वल्मीको वा चतुर्हस्तात् ॥९४॥**

पदद्वये वामांसे कृष्णवर्णे वर्षाय० ॥ ३० ॥ ॐ उत नो० (१)। अहमावाहयिष्यामि अदितिञ्च सुरेश्वरीम् । मातरं सर्वदेवानां पीतवर्णां सुशोभनाम् ॥ तत्प्राक्पदद्वये वामश्रोत्रे पीतवर्णे ॐ भूः अदितये नमः ॥ ३१ ॥

ॐ अदितिर्द्यौ० (२) अहमावाहयिष्यामि दितिं चैव सुरेश्वरीम् । पीतवर्णां महाकायां सर्वदानवमातरम् ॥ तत्प्रागेक पदे वामनेत्रे पीतवर्णे ॐ भूः दित्यै नमः ॥ ३२ ॥ ततः शिखिपदाधःस्थितकोणपदे मुखे शुक्लवर्णे ॐ आपो अस्मान्० (३)। अहमावाहयिष्यामि आपो याः स्फटिकप्रभाः । कर्पूरसदृशाः सौम्याः क्षीरोदकपरिप्लुताः ॐ भूः अद्भ्यो नमः ॥ ३३ ॥ आग्नेये वायुकोणपदाधःकोणपदे दक्षिणहस्ते शुक्लवर्णे ॐ उपया० सावित्रोऽसि० (४) सावित्रं स्वर्धुनीलोके विमलं च गजाननम् । एकाक्षरं शिवं सौरिं सवितारं महेश्वरम् ॥ ॐ भूः सावित्राय० ॥ ३४ ॥ नैर्ऋत्ये पितृपदाधः कोणपदे मेढ्रे श्वेतवर्णे ॐमर्माणि ते० (५) आवाहयाम्यहं देवं जयं देवेन्द्रपूजितम् । विद्युद्ध्वजनिभवं भीमजवं हि विजयप्रभुम् ॥ ॐ भूः जयाय नमः ॥ ३५ ॥ वायव्ये रोगपदाधः कोणपदे वामहस्ते रक्तवर्णे ॐ सुत्रामाणं० (६)। आवाहयाम्यहं देवं रुद्रञ्च जगतः प्रभुम् । चतुर्भुजं वृषारुढं सर्वलोकनमस्कृतम् । ॐ भूः रुद्राय नमः ॥ ३६ ॥ ततो मध्यगतनवकोष्ठकसंलग्नपूर्वपदत्रये दक्षिणस्तने कृष्णवर्णे ॐ अर्यमणं० (७)। आवाहयाम्यर्यमणमहं देवं त्रिलोचनम् । वनस्पतिसमाकारं कृष्णवर्णं महाप्रभुम् ॐ भूः अर्यम्णे नमः ॥ ३७ ॥

तद्दक्षिणाग्नेयकोणपदे दक्षिणहस्ते रक्तवर्णे ॐ उपया० सावित्रो० (८) ॐ सावत्रे नमः । आवाहयाम्यहं देवं सवितारं दिवाकरम् । सप्ताश्वरथसंयुक्तं

---

(१) ॐ उत नोऽहिर्बुध्न्यः शृणोत्वज ऽएकपात्पृथिवी समुद्रः । व्विश्वे देवाऽ ऋतावृधो हुवाना स्तुता मन्त्राः कविशस्ताऽ अवन्तु ।

(२) ओं अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः । व्विश्वे देवाऽ अदितिः पञ्च जनाऽ अदितिर्जातमदितिर्जनित्वम् ।

(३) ओं आपोऽ अस्मान्मातरः शुन्धयन्तु घृतेन नो घृतप्वः पुनन्तु । व्विश्वᳬं हि रिप्रं प्रवहन्ति देवीरुदिदाभ्यः शुचिरा पूतऽ एमि ।

(४) ओं उपयामगृहीतोऽसि सावित्रोऽसि चनोधाश्चनोधाऽ असि चनो मयि धेहि । जिन्व यज्ञं जिन्व यज्ञपतिं भगाय देवाय त्वा सवित्रे ।

(५) ओं मर्माणि ते व्वर्मणा च्छादयामि सोमस्त्वा राजाऽमृतेनानु वस्तान् । उरोर्वरीयो व्वरुणस्ते कृणोतु जयन्तं त्वाऽनु देवा मदन्तु ।

(६) ओं सुत्रामाणं पृथिवीं द्यामनेहसᳬं सुशर्माणमदितिᳬं० सुप्रणीतिम् । दैवी नावᳬं स्वरित्रामनागसमस्रवन्तीमारुहेमा स्वस्तये ।

(७) ओं अर्यमणं बृहस्पतिमिन्द्रं दानाय चोदय । व्वाचं व्विष्णुᳬं सरस्वतीᳬं सवितारं च व्वाजिनᳬं स्वाहा ।

(८) ओं उपयामगृहीतोऽसि सावित्रोऽसि चनोधाश्चनोधाऽ असि चनो मयि धेहि । जिन्व यज्ञं जिन्व यज्ञपतिं भगाय देवाय त्वा सवित्रे ।

तमोवृन्दनिवारणम् ॥ ३८ ॥ तदधः पश्चिमपदत्रये जठरदक्षिणभागे शुक्लवर्णे ॐ विवस्वन्ना० (१)। अहमावाहयिष्यामि विवस्वन्तं महाबलम्। रक्तनेत्रं विशालाक्षं यज्ञमूर्त्तिं सुरेश्वरम् ॥ ॐ भूः विवस्वते० ॥ ३९ ॥ तत्पश्चिमनैर्ऋत्यकोणपदे वृषणयोः रक्तवर्णे--ॐ इन्द्रः सुत्रामा० (२) । अहमावाहयिष्यमि विबुधाधिपतिं प्रभुम् । नाकाधिपं सहस्राक्षं खड्गखेटकधारिणम् ॥ ॐ विबुधाधिपायनमः ॥४०॥ तदुत्तरपदत्रये जठरवामभागे श्वेतवर्णे ॐ तन्मित्रस्य० (३) । अहमावाहयिष्यामि मित्रं चारुणसन्निभम् । वज्रहस्तं सुरश्रेष्ठं यज्ञकर्मवरप्रदम् ॥ ॐ भूः मित्राय० ॥४१॥ तदुत्तरैकपदे वामहस्ते श्वेतवर्णे ॐ अभि गोत्राणि० (४) । आवाहयामि तं देवं द्विभुजं राजयक्ष्मणम् ॥ धनुर्वाणसमायुक्तं यज्ञकर्मवरप्रदम् । ॐ भूः राजयक्ष्मणे नमः ॥४२॥ तत्प्राक्पादत्रये वामस्तने रक्तवर्णे ॐ पृथिवीच्छन्दः० (५) । पृथ्वीधरं महत्तेजः स्फटिकच्छविमीश्वरम् । भूतनाथं महाकायं देवमावाहयाम्यहम् ॐ भूः पृथ्वीधराय० ॥४३॥ तत्प्रागीशानकोणपदे उरसि शुक्लवर्णे ॐ आ ते वत्सो० (६) अहमावाहयिष्यामि आपवत्सं महाप्रभुम् । कर्पूरसदृशं सौम्यं क्षीरोदपरिपूरितम् ॥ ॐ भूः आपवत्साय नमः ॥४४॥ मध्ये नवपदे हृदये नाभौ च अष्टदले ॐ आ ब्रह्मन्० (७) सर्वदेवप्रधानञ्च सर्वकामफलप्रदम् । अग्रतः सर्वसम्पूज्यं प्रारम्भे यज्ञकर्म्मणि ॥ ॐ भूः ब्रह्मणे नमः ॥४५॥ ईशान्यां धूम्रवर्णायाम् ॐ ईशा व्वास्यम्० (८) ॐ भूः चरक्यै० ॥१॥ आग्नेय्यां रक्तवर्णायाम् ॐ अग्निंदूतम् भूः ॐ विदार्यै० ॥२॥ नैर्ऋत्यां

---

(१) ॐ विवस्व- न्नादित्यैष ते सोमपीथस्तस्मिन्मत्स्व । श्रदस्मै नरो व्वचसे दधातन यदाशीर्दा दम्पती व्वाममश्नुतः । पुमान्पुत्रो जायते विन्दते व्वस्वधा व्विश्वाहाऽरप ऽएधते गृहे ।

(२) ॐ इन्द्रः सुत्रामा स्ववाँ अवोभिः सुमृडीको भवतु व्विश्ववेदाः । व्वाधतां द्वेषो अभयं कृणोतु सुवीर्य्यस्य पतयः स्याम ।

(३) ॐ तन्मित्रस्य व्वरुणस्याभिचक्षे सूर्यो रूपं कृणते द्योरुपस्थे । अनन्तमन्यद्रुशदस्य पाजः कृष्णमन्यद्धरितः संभरन्ति ।

(४) ॐ अभि गोत्राणि सहसा गाहमानोऽदयो व्वीरः शतमन्युरिन्द्रः । दुश्च्यवनः पृतनाषाडयुध्योऽस्माकꣳ सेनाऽ अवतु प्र युत्सु ।

(५) ॐ पृथिवी च्छन्दोऽन्तरिक्षं छन्दो द्यौश्छन्दः समाश्छन्दो नक्षत्राणि च्छन्दो वाक् छन्दो मनश्छन्दः कृषिश्छन्दो हिरण्यं छन्दो गौश्छन्दोऽजा च्छन्दोऽश्वश्छन्दः ।

(६) ॐ आ ते व्वत्सो मनो यमत्परमा चित्सधस्थात् । अग्ने त्वाङ्कामया गिरा ।

(७) ॐ आ व्ब्रह्मन्-ब्राह्मणो व्ब्रह्मवर्चसी जायतामाराष्ट्रे राजन्यः शूरऽइषव्योऽतिव्याधी महारथो जायतां दोग्ध्री धेनुर्वोढाऽनड्वानाशुः सप्तिः पुरन्धिर्योषा जिष्णू रथेष्ठाः सभेयो युवाऽस्य यजमानस्य व्वीरो जायतां निकामेनिकामे नः पर्जन्यो व्वर्षतु फलवत्योऽ नऽ ओषधयः पच्यन्तां योगक्षेमो नः कल्पताम् ।

(८) ॐ ईशा व्वास्यमिदꣳ० सर्वं यत्किं च जगत्यां जगत् । तेन त्यक्तेन भुञ्जीथा मा गृधः कस्य स्विद्धनम् ।

पीतहरितवर्णायां ओं नमः स्रुत्याय० (१) ओं भूः पूतनायै० ॥३॥ वायव्ये कृष्णवर्णायाम् वायव्यै वा० (२) ओं भू, पापराक्षस्यै० ॥४॥ पूर्वे रक्तवर्णे ओं यत्र बाणाः सं० । (३) ओं भूः स्कन्दाय० ॥१॥ तद्दक्षिणे कृष्णवर्णे अर्यमणम्० ओं भूः अर्यम्णे० (४) ॥२॥ पश्चिमे रक्तवर्णे ओं सरोभ्यो० (५) ओं भूः जृम्भकायन० ॥३॥ उत्तरे वर्णे ओं का स्विदासी० (६) ओं भूः पिलिपिच्छाय ॥ ४ ॥ ईशा० रक्तवर्णे यमाय त्वा (७) भीमरूपाय नमः ॥१॥

अग्निकोणे कृष्णवर्णे त्र्यम्बकं० (८) त्रिपुरारये० २ ॥ नैर्ऋत्ये पीतवर्णे ॐ असुन्वन्त० (९) अग्निजिह्वाय० ॥३॥ वायव्ये ओं वातो वा० (१०) रक्तवर्णे करालाय ॥४॥ पूर्वे हेतुकाय० ओं हेमन्तेन ऋ० (११) कृष्णवर्णे दक्षिणे कृष्णे अग्नि-वेतालकाय० ओं अग्निं दूतम् (१२) । पश्चिमे कृष्णे ओं वरुणस्योत्तम्भनम् (१३) ।

---

(१) ॐ नमः स्रुत्याय च पथ्याय च नमः काट्याय च नीप्याय च नमः कूल्याय च सरस्याय च नमो नादेयाय च व्वैशन्ताय च ।

(२) ॐ व्वायव्यैर्व्वायव्यान्याप्नोति स तेन द्रोणकलशम् । कुम्भीभ्यामम्भृणौ सुते स्थालीभि स्थालीराप्नोति ।

(३) यत्र बाणाः सम्पतन्ति कुमारा व्विशिखाऽइव । तन्नऽ इन्द्रो बृहस्पतिरदितिः शर्म यच्छतु व्विश्वाहा शर्म यच्छतु ।

(४) ॐ अर्यमणं बृहस्पतिमिन्द्रं दानाय चोदय । व्वाचं व्विष्णु ꣳ० सरस्वती ꣳ सवितारं च व्वाजिनꣳ० स्वाहा ।

(५) ॐ सरोभ्यो धैवरमुपस्थावराभ्यो दाशं व्वैशन्ताभ्यो व्वैन्दंन्न ड्वलाभ्यः शौष्कलं पाराय मार्गारमवाराय केवर्तं तीर्थेभ्यऽ आन्दं विषमेभ्यो मैनाल ꣳ स्वनेभ्यः पर्णकं गुहाभ्यः किरातꣳ० सानुभ्यो जम्भकं पर्वतेभ्यः किंपूरुषम् ।

(६) ॐ का स्विदासीत्पूर्वचित्तिः किꣳ स्विदासीद् बृहद्वयः । का स्विदासीत्पि-लिप्पिला का स्विदासीत्पिशङ्गिला ।

(७) ॐ यमाय त्वाऽङ्गिरस्वते पितृमते स्वाहा । स्वाहा घर्माय स्वाहा घर्मः पित्रे ।

(८) ॐ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतात् ।

(९) ॐ असुन्वन्तमयजमानमिच्छ स्तेनस्येत्यामन्विहि तस्करस्य । अन्यमस्मदिच्छ सा तऽ इत्या नमो देवि निर्ऋते तुभ्यमस्तु ।

(१०) ॐ वातो वा मनो वा गन्धर्व्वाः सप्तविꣳ० शतिः । तेऽ अग्रेऽश्वमयुञ्जँस्तेऽ अस्मिन्नवमादधुः ।

(११) ॐ हेमन्ते न ऋतुना देवास्त्रिणवे मरुतस्तुताः । बलेन शक्करीः सहो हविरिन्द्रे व्वयो दधुः ।

(१२) ॐ अग्निं दूतं पुरो दधे हव्यवाहमुप ब्रुवे । देवाँ आसादयादिह ।

(१३) ॐ व्वरुणस्योत्तम्भनमसि व्वरुणस्य स्कम्भसर्जनी स्थो व्वरुणस्यऽ ऋतसदन्यसि व्वरुणस्य ऋतसदनमसि व्वरुणस्य-ऋतसदनमासीद ।

उत्तरे ओं कुविदङ्ग० (१) पीतवर्णं० ईशानपूर्वयोर्मध्ये गन्धमाल्याय. ओं गन्धद्वारां० (२) ज्वालास्याय० ओं महीद्यौः । बाह्यदेवताः प्रासादे ताः प्रपूजयेत् । इन्द्रादीन् दश दिक्पालांश्च पूजयेत् ।

१ ॐ तमीशानं० शिखिने नमः
२ ॐमहाँ इन्द्रः० पर्जन्याय नमः
३ ॐ धन्वना गाः० जयन्ताय नमः
४ ओं महाँ इन्द्रो य० कुलिशायुधाय नमः
५ ओं सूर्यरश्मि० सूर्याय नमः
६ ओं व्रतेन दीक्षाम्० सत्याय नमः
७ ओं भद्रं कर्णेभिः० भृशाय नमः
८ ओं वषट्‌ते० सोम० आकाशाय नमः
९ ओं आ वायो भूष० वायवे नमः
१० पूषन्तव० पूष्णे नमः
११ सविता प्रथ० वितथाय नमः
१२ सविता त्वा स० गृहक्षताय
१३ यमाय त्वा यमाय नमः
१४ प्र तद्वोचेद्० गन्धर्वाय०
१५ सुपर्णः पार्जन्यः० भृङ्गराजाय०
१६ तद्विष्णोः प० मृगाय नमः
१७ पितृभ्यः स्व० पितृभ्यो नमः
१८ द्रविणोदाः पि० दौवारिकाय
१९ सुषुम्णः सूर्य० सुग्रीवाय नमः
२० नक्षत्रेभ्यः स्वा० पुष्पदन्ताय०
२१ इमम्मे व० वरुणाय नमः
२२ ये रूपाणि० असुराय नमः
२३ असवे स्वा० शोषाय नमः
२४ सूर्यरश्मिर्ह० पापाय नमः
२५ शिरो मे० रोगाय नमः
२६ नमोऽस्तु स० अहये नमः
२७ इषे त्वोर्जे० मुख्याय नमः
२८ वयमहाँ अ० भल्लाटाय०
२९ वषट्‌ते० सोम० सोमाय०
३० उदु त्यम्० सर्पाय नमः
३१ उतनोऽहि० अदितये०
३२ अदितिर्द्यौ० दितये नमः
३३ आपो अस्मान्० अद्भ्यो नमः
३४ उपयामगृहीतोऽसि सावित्रोऽसि० सावित्राय०
३५ मर्माणि ते० जयाय नमः
३६ सुत्रामाणं पृ० रुद्राय नमः
३७ अर्यमणं बृ० अर्यम्णे
३८ उप० सावित्रो० सवित्रे नमः
३९ विवस्वन्ना० विवस्वते०
४० इन्द्रः सुत्रामा विबुधाधिपा म०
४१ तन्मित्रस्य० मित्राय नमः
४२ अग्निगोत्राणि० राजयक्ष्मणे०
४३ पृथिवी छन्दः, पृथिवीधराय०
४४ आ ते वत्सो आपवत्साय०
४५ आ ब्रह्मन्० ब्रह्मणे नमः
१ ईशा वास्यम्० चरक्यै नमः
२ अग्निं दू० विदार्यै०
३ नमः सुत्या० पूतनायै०
४ वायव्यैर्वा० पापराक्षस्यै०
१ यत्र बाणाः, स्कन्दाय०
२ अर्यमणं० अर्यम्णे०
३ सरोभ्यो धै० जृम्भकाय०
४ का स्विदा० पिलिपिच्छाय

इति मन्त्रैः ।

---

(१) ॐ कुविदङ्ग यवमन्तो यवं चिद्यथा दान्त्यनुपूर्वं वियूय । इहेहैषां कृणुहि भोजनानि ये बर्हिषो नमउक्तिं यजन्ति ।

(२) ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् । ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ।

(१) ततो वास्तुमण्डलमध्ये कलशं संस्थाप्य (२) तत्र वरुणमावाह्य वास्तोष्पतिमूर्त्तेः (३) स्थापनं 'वास्तोष्पत इति पूजनं च (४)। प्रार्थना-'यथा मेरुगिरेः शृङ्गं देवानामालयः सदा। तथा ब्रह्मादिदेवानां मम गेहे स्थिरो भव' इति । वेद्यां वितान बन्धनम् । अथ दक्षिणतो ब्रह्माणमुपवेश्य अग्नेरुत्तरतः प्रणीतातोऽतिरिक्तमुदपात्रं प्रतिष्ठाप्य (पार० गृ० ३।४५ कर्क) प्रणीताप्रणयनं विधाय परिस्तरणादि-कुशकण्डिकापूर्वकं चरुं ( स्थालीपाकं ) श्रपयित्वा प्रोक्षण्युत्पवनान्ते आघारादिहोमात्प्राक् ( पा० ३।४।५ क० हरि० ) बहिर्निष्क्रम्य द्वारसमीपे गृहाभिमुखः स्थित्वा "ब्रह्मन् प्रविशामि" इति ब्रह्माणं पृच्छेत् यजमानः । "ओं प्रविश" इति ब्रह्मणाऽनुज्ञातः "ओं ऋतं प्रपद्ये शिवं प्रपद्ये" इति मन्त्रेण शालां प्रविश्य स्वासने उपविश्य उपयमनकुशानादाय तिष्ठन् समिधोऽभ्याधाय अग्निं पर्युक्ष्य पवित्रे प्रणीतासु निधाय दक्षिणं जान्वाच्य 'इह रतिरिति षट् आहुतीराज्येन जुहुयात् ( पार० ३।४।७ कर्क० हरि० ) (५)।

---

(१) "ब्रह्मस्थाने ततो विद्वान् कुर्यादाधारमक्षतैः । तस्मिन् संथापयेत्कुम्भं वर्द्धन्या सह पूरितम् " इति वास्तुयागतत्त्वे वचनात् । विश्वकर्मप्रकाशे तु—" कलशे स्थापयेद्देवं वरुणं वारुणैस्ततः " ( ६।१७० ) इत्यादिना कलशस्थापनमुक्तं, स्थानं नोक्तम् । तत्र सामान्यनियमात् ईशान्यां तत्स्थापनमिति पद्धतिकाराः ।

(२) कलशे सर्वौषध्यादिप्रपेक्षणानन्तरं द्रव्यविशेषाः प्रक्षेप्या उक्ता वास्तुशान्तौ, ते यथा—" वटोर्वटोदुम्बरस्य वेतसस्य तथैव च । अश्वत्थस्यैव मूलं च पञ्च काषायकाः स्मृताः । तुलसी सहदेवो च विष्णुक्रान्ता शतावरी । मूलान्येतानि गृह्णीयाच्छतालाभे विशेषतः " वि० प्र० ६।१०४-१०६ इति ।

(३) वास्तुमूर्तिः सर्पाकारा कार्या—" इति प्रार्थ्य ततो भूमौ संलिखेद्वास्तुपुरुषम् । पिष्टातकैस्तण्डुलैर्वा नागरूपधरं विभुम् " इति ( वि० प्र० १अ७ ) वचनात् । " गृहवास्तुं प्रवक्ष्यामि येन देवमयो भवेत् । ईशानादि निर्ऋत्यन्तं वास्तुः सर्पः प्रकीर्तितः " इति प्रतिष्ठा सरणौ सङ्गमशक्तितन्त्रधृतवचनाच्च ।

(४, अत्र वास्तुदेवतापूजन-बलिदान-होम-प्रतिमानिखननान्तः परिशिष्टाद्युक्तो मुख्यः पक्षः । प्रतिमानिखननरहितो मात्स्योक्तो मध्यमः । पूजाबलिदानमात्रः शारदोक्तः कनिष्ठः । न च मतभेदात्सर्वेऽपि मुख्यकल्पा एवेति वाच्यम् । "एककर्मणि गुणविशेषे फलविशेषः" (का० श्रौ०) इति न्यायेन समानफलानुत्पत्तेः ।

(५) वास्तोष्पत इति मन्त्रैश्चतुर्भिर्होमः शिख्यादिहोमात्पूर्वमेव कार्य इति युक्तं पश्यामः । अत्र वास्तुशान्तौ वास्तोष्पतिदेवस्य प्रधानत्वात् प्रधानहोमस्य च पूर्वमेव न्याय्यत्वात् । परिशिष्टे—" वास्तोष्पत इति चतसृभिश्चरुणा समित्तिलपायसाज्यैः केवलाज्येन वा हुत्वा होमशेषं समाप्य " ( आश्व० प० ) इत्युक्तेश्च । पद्धतिकारैस्तु सर्वैः शिख्यादिहोम एव पूर्वमुक्तः । तैः शिख्यादयोऽपि प्रधानत्वेनैवाङ्गीकृताः । शिख्यादिहोमानन्तरं वास्तोष्पत इति चतुर्भिर्मन्त्रैः प्रधानहोमः, ततो बिल्वहोम इति पद्धतिक्रमः । अस्माकं मते तु आदौ प्रधानहोमः ततः शिख्यादिहोमः । ततो बिल्वहोमः । प्रधानहोमश्च प्रतिद्रव्यं प्रतिमन्त्रं वा अष्टादिसङ्ख्यया, शिख्यादिहोमश्चाष्टसंख्यया, सामान्यनियमात् । " होमो

ॐ इह रतिरिह रमध्वमिह धृतिरिह स्वधृतिः स्वा० । इदमग्नये नमम १ ॐ उपसृजन् धरुणं मात्रे वरुणो मातरं धयन् । रायस्पोषमस्मासु दीधरत्स्वाहा । इदमग्नये नमम २ ॐ वास्तोष्पते प्रतिजानी० यत्त्वेमहे० इदं वास्तोष्पतये नमम ३ ॐ वास्तोष्पते प्रतर० रश्वेभिरिन्दो । अजरासस्ते सख्ये स्याम पितेव पुत्रान्प्रति नो जुषस्व शं नो भ० इदं वास्तोष्पतये न० ४ । ॐ वास्तोष्पते शग्मया शर्ठ० सदा ते सक्षीम हिरण्वया गातुमत्या । पाहि क्षेम उत योगे वरं नो यू० ५ ( ऋ० ५।४।२१-१-१३ ) ॐ अमीवहा वा० इदं वास्तोस्पतये० ६ ( ऋ० ५।४।१२।१ ) । अथ ब्रह्मणाऽन्वारब्धः आघारावाज्यभागौ हुत्वा ( पार० ३।४।७ हरि० ) चरुमभिघार्य स्थालीपाकेन स्रुवेण षड़ाहुतीर्जुहुयात् ( पार० ३।४।८ ) तत्र मन्त्राः—ॐ अग्निमिन्द्रं बृहस्पतिं विश्वांश्च देवानुपह्वये । सरस्वतीं च वाजी च वास्तु मे दत्त वाजिनः स्वा० इदममग्नये इन्द्राय बृहस्पतये विश्वेभ्यो देवेभ्यः सरस्वत्यै वाज्यै च नमम० १ ॐ सर्वदेवजनान् सर्वान् हिमवन्तर्ठ० सुदर्शनम् । वसूंश्च रुद्रानादित्यानीशानं जगदैः सह । एतान् सर्वान् प्रपद्येऽहं वास्तु मे दत्त वाजिनः स्वा० इदं सर्वदेवजनेभ्यो हिमवते सुदर्शनाय वसुभ्यो रुद्रेभ्य आदित्येभ्य ईशानाय जगदेभ्यश्च न० २ ॥

ॐ पूर्वाह्णमपराह्णं चोभौ मध्यन्दिना सह । प्रदोषमर्द्धरात्रं च व्युष्टां देवीं महापथाम् । एतान् सर्वान् प्र० स्वाहा, इदं पूर्वाह्णायाऽपराह्णाय मध्यन्दिनाय अर्धरात्राय व्युष्टायै देव्यै महापथायै च नमम ३ ॐ कर्त्तारं च विकर्त्तारं विश्वकर्माणमोषधींश्च वनस्पतीन् । एतान् सर्वान् प्रपद्येऽहं वा० । इदं कर्त्रे विकर्त्रे विश्वकर्मण ओषधीभ्यो वनस्पतिभ्यश्च न० ४ ॐ धातारं च विधातारं निधीनां च पतिर्ठ० सह । एतान् सर्वा० । इदं धात्रे निधीनां च पतये नमम ५ ॐ स्योनर्ठ० शिवमिदं वास्तु दत्तं ब्रह्मप्रजापती । सर्वाश्च देवताः स्वा० । इदं ब्रह्मणे प्रजापतये सर्वाभ्यो देवताभ्यश्च न० ६ अथ द्रव्यत्यागः—ततो ग्रहहोमं समित्तिल चर्वाज्यैः प्रत्येकं प्रतिद्रव्यमष्टसङ्ख्यया अष्टाविंशत्यादिसङ्ख्यया वा विदध्यात् । ग्रहहोमे चरुहोमो वैकल्पिकः । ततोऽत्र वास्तोष्पतेः प्रधानत्वात् प्रधानान्तरस्येव आदौ होमः । तद्यथा- वास्तोष्पते प्रति जानी० चतुष्पदे स्वाहा० इति चतुर्भिः समित्तिलचर्वाज्यैः प्रतिद्रव्यमष्टोत्तरशतं जुहुयात् । ततः "अघोरेणाथ मन्त्रेण घृतेनाष्टोत्तरं शतम् । जुहुयाद्वास्तुपुंसोऽपि सन्धानार्थन्तु मर्मणाम्" इति-गृह्यकारिकोक्तेः 'अघोरेभ्य' इति मन्त्रेण-

ग्रहादिपूजायां शतमष्टोत्तरं भवेत् । अष्टाविंशतिरष्टौ वा यथाशक्ति विधीयते । अष्टोत्तर सहस्रं वा तत्संख्या परिकीर्तिता " इति वचनात् । अथवा शिख्यादिभ्यो दशदशसंख्यया होमः कार्यः । " इतरान् दशभिर्देवानाहुतिभिः प्रकल्पयेत् " इति वास्तुयागतत्त्वे रघुनन्दन धृतवचनात् । अथवा " वास्तोष्पत इति चतसृभिः प्रत्पृचं हुत्वा " इति सूत्रविहितहोमे सक्तत्संख्या यथा गृह्यते, तद्वदत्रापि सक्तत्संख्यैव ग्राह्या, तेन शिख्यादिभ्यः एकैकाऽहुतिरित्यपि पक्षो बोध्यः ।

आज्येनाष्टोत्तरसङ्ख्यया जुहुयात् । ॐ अघोरेभ्योऽथ० भ्यः स्वा० । अयं होमः प्रधानभूतवास्तुपुरुषमुद्दिश्य विहितः, अतोऽस्यापि प्रधानत्वात् अङ्गहोमस्यादावेव कार्यः । अथ अङ्गदेवताभ्यः शिखादिभ्यो (१) वास्तुमण्डलीयेभ्यः समित्तिलचर्वाज्यानि प्रत्येकं प्रतिद्रव्यमष्टादिसंख्यया जुहुयात् । (शिख्यादीनामष्टसङ्ख्यापत्ते चरक्यादिभ्यः चतुःसंख्यया होममाचरन्ति) । ॐ शिखिने स्वाहा इति नाममन्त्रो वैदिको वा मन्त्रो होमे । ततः वास्तोष्पत इति चतसृभिः ॐ वास्तोष्पते ध्रुवा स्थूणां सत्रं सोम्यानाम् । द्रप्सो भेत्ता पुरां शश्वतीनामिन्द्रो मुनीनां सखा स्वा० ( ऋ० ६। १ । २४ । ५ ) इति प्रत्यृचं पञ्च-पञ्च एकैकं वा घृताक्तं बिल्वं जुहुयात् । ततः पूजा, स्विष्टकृत्, नवाहुतयः । ततो वास्तुमण्डलपश्चिमदेशे शिख्यादिदेवताभ्यः तत्तद्बलिः पायसबलिर्वा देयः ( २ ) । शक्तौ सत्यां सर्वेभ्यः सुवर्णेन बलिदानम् । ब्रह्मणे तु गां पयस्विनीं दद्यादिति विशेषः । चरक्यादिभ्यो माषभक्तबलिरिति कमलाकरादयः । दिक्पालबलिः । क्षेत्रपालबलिः । सार्वभौतिकबलिः—

"बलिं गृह्णन्त्विमे देवा आदित्या वसवस्तथा ।
मरुतो ऽथाश्विनौ रुद्राः सुपर्णाः पन्नगा ग्रहाः ।
असुरा यातुधानाश्च पिशाचोरगराक्षसाः ।
डाकिन्यो यक्षवेताला योगिन्यः पूतनाः शिवाः ।
जृम्भकाः सिद्धगन्धर्वा देवा विद्याधरा नगाः ।
दिक्पाला लोकपालाश्च ये च विघ्नविनायकाः ।
जगतां शान्तिकर्तारो ब्रह्माद्याश्च महर्षयः ।
मा विघ्नं मा च मे पापं मा सन्तु परिपन्थिनः ।
सौम्या भवन्तु तृप्ताश्च भूतप्रेताः सुखावहाः" इति ।

---

(१) शिख्यादिहोमः पूजान्ते कार्यः—विश्वकर्मप्रकाशे (अ० श्लो० ५०।९९) शिख्यादिपूजनमुक्त्वा ततः कलशस्थापनं च ( वि० प्र० ५।१००।१०९ ) उक्त्वा अनन्तरं "होमश्चि मेखले कार्यः" ( वि० प्र० ५।११०-११२ ) इत्यादिना पूजनानन्तरमेव होमविधानात् ।

(२) वास्तुबलिर्होमान्ते कार्यः—"होमान्ते भक्ष्यभोज्यैस्तु वास्तुदेशे बलिं हरेत् । नमस्कारान्तयुक्तेन प्रणवाद्येन सर्वतः" ( विश्वकर्म प्र० ५।११३ ) इति वचनात् । स च बलिः—"घृतान्नं शिखिने दद्यात्" ( वि० क० ५।११६-१३३ ) इत्यादिना शिख्यादि देवेभ्यः पृथक् पृथग्द्रव्यैर्विहितेभ्यस्तत्तद्द्रव्येण देयः । "अथवा पायसं दद्यात् सर्वेभ्यश्च सदीपकम्" ( वि० प्र० ५।१३४ ) इति वचनात्, "पायसं वाऽपि दातव्यं स्वनाम्ना सर्वतः क्रमात् । नमस्कारान्तयुक्तेन प्रणवाद्येन सर्वतः" इति मात्स्यात् "पायसान्नैर्बलिं हरेत्" इति शारदातिलकाच्च सर्वेभ्यः पायसद्रव्येण वा बलिर्देयः । आग्नेये तु बलिविशेषमभिधाय "यजेत सकलं वास्तु दध्यक्षतकुशैर्जलैः" (अग्निपु० इत्युक्तम्) । बलिश्च कुक्कुटाण्डप्रमाणं तु बलिरित्यभिधीयते" इति स्मृत्यर्थसारोक्तः कार्यः । सति सम्भवे—"सर्वेभ्योऽपि हिरण्यं च ब्रह्मणे गां पयस्विनीम्" ( वि० प्र० ५ । १३३ ) इति वचनात् शिख्यादिभ्यश्चतुश्चत्वारिंशद्भ्यः सुवर्णं, ब्रह्मणे च गां तन्निष्क्रयं, वा दद्यात् ।

ततो नवपदे ब्रह्मस्थाने (१) पृथिवीं सुभूषितां स्त्रीरूपां ध्यात्वा "ॐ भूर्भुवः स्वः धरायै नमः" इति विश्वकर्मप्रकाशोक्तमन्त्रेण सम्पूज्य "ॐ सर्वदेवमयं वास्तु वास्तुदेवमयं परम्" इति पठेत् । ततो गृहं प्रागादितस्त्रिसूत्र्या रक्षोघ्नेन पवमानेन च सूक्तेन वेष्टयेत् (२) ॐ कृणुष्वपाजः प्र० प्रमृणीहि शत्रून् ५ इति रक्षोघ्नं सूक्तम् । ॐ पुनन्तु मा पितरः सोम्या० रयीणाम् इति अष्टकण्डिकात्मकं पवमानसूक्तम् । ततो दुग्धपूर्णया जलपूर्णया च स्तनकुम्भीभ्यां गृहं प्रागादितः अविच्छिन्नधाराद्वयेन सिञ्चेत् (३) सप्तधान्यबीजानि प्रक्षिपेच्च । (४) अथ यजमानः गृहस्य आग्नेये ईशानकोणात् अष्टमे आकाशपदे भूमिं जानुमात्रं खानयित्वा गोमयमृज्जलैरुपलेप्य शुक्लगन्धपुष्पादिभिरलङ्कृत्य सप्तधान्यादीनि दधि च तत्र प्रक्षिप्य जलपूर्णं गन्धादिभिरर्चितं नवं कुम्भं हस्ताभ्यामादाय जानुनी भूमौ निपात्य ॐ नमो वरुणाय इति जलेन गर्त्तं पूरयेत् । ततो मृन्निर्मितपेटिकायां सप्तधान्य-दधि-शैवाल-पुष्पाणि प्रक्षिप्य ब्रह्मस्थाने पूजितमृण्मयवास्तुप्रतिमामानीय तस्यां संस्थाप्य गन्धादिभिः सम्पूज्य--

पूजितोऽसि मया वास्तो होमाद्यैरर्चनैः शुभैः ।
प्रसीद पाहि विश्वेश देहि मे गृहजं सुखम् ॥ १ ॥

---

(१) 'ततः संपूजयेत्तस्मिन् सर्वलोकवसुन्धराम् । सुरूपां प्रमदारूपां दिव्याभरणभूषिताम् । ध्यात्वा तमर्चयेद्देवीं परितुष्टां स्मिताननाम्" इति वास्तुयागतत्त्वे रघुनन्दनोक्तेः । वास्तुमण्डलमध्ये तु ब्रह्मस्थाने प्रपूजयेत् । सुरूपां पृथिवीं दिव्यरूपाभरणसंयुताम्" ( वि० प्र० ६ । ३४ ) इति वचनाच्च ब्रह्मस्थाने ब्रह्मपूजोत्तरं तस्मिन्नेव पदे तदुत्तरतो धरापूजनमाचरन्ति । केचित्तु अस्मिन्नेवावसर इति ।

(२) "वास्तूपशमनं कृत्वा ततः सूत्रेण वेष्टयेत् । रक्षोघ्नपवमानेन सूक्तेन भवनादिकम्" इति मात्स्यात् । कृणुष्वपाज इति पञ्चर्चं रक्षोघ्नसूक्तम् , पुनन्तु मा पितर इत्यादिकं नवर्चं पवमानसूक्तम् ।

(३) "बलिं च सम्यग्विधिवत्प्रयुज्य क्षीरेण धारां परितस्तु दद्यात्" इति मात्स्यात् । "वाचयित्वा ततः स्वस्ति कर्करीं परिगृह्य च । सूत्रमार्गेण तोयस्य धारां कुर्यात्प्रदक्षिणाम् । प्रक्षिपेत्तेन मार्गेण सर्वबीजानि चैव हि" ( ६ । ८७-८८ ) इति विश्वकर्मप्रकाशोक्तेश्च जलदुग्धोभयधाराकरणमत्र कर्तव्यम् ।

(४) "होमशेषं समाप्याथ यजमानो वास्तुमूर्तिं रौद्रकोणेऽधोमुखीं गर्ते प्रच्छादयेत्" इति आश्वलायनगृह्यपरिशिष्टे ( ४ ।२ ) पूजितवास्तुप्रतिमाया गर्ते प्रच्छादनमीशानकोणेऽभिहितम्, "मृत्पेटिकां स्वर्णरत्नधान्यशैवालसंयुताम् । गृहमध्ये हस्तमात्रे गर्ते न्यासाय विन्यसेत्" इति नारदसंहितायां मृत्पेटिकाया गृहमध्ये गर्ते निधानमुक्तम् । शान्तिसारादिकारैस्तु उभयैकवाक्यतया वास्तुप्रतिमां मृत्पेटिकायां निधाय गर्ते तस्या निधानमुक्तम् । अथ च वास्तुभूमेरेकाशीतिपदानि कल्पयित्वा ईशानकोणादष्टमे आकाशपदे निधानमुक्तम्, तच्च परिशिष्टोक्तसंहितोभयविरुद्धमिति चेन्न । आकाशपदस्यैव रौद्रत्वस्वीकारात् । लिङ्गतोभद्रादिमण्डले इन्द्राग्न्योर्मध्यस्य रुद्रायतनत्वकथनात् ।

नमस्ते वास्तुपुरुष भूशय्याभिरत प्रभो ।
मद्गृहं धनधान्यादिसमृद्धं कुरु सर्वदा ॥ २ ॥
( वि० प्र० ५।११६ )

प्रार्थयामीत्यहं देवं शालाया अधिपस्तु यः ।
प्रायश्चित्तं प्रसङ्गेन गृहार्थं यन्मया कृतम् ॥ ३ ॥
मूलच्छेदं तृणच्छेदं कृमिकीटनिपातनम् ।
हननं जलजीवानां भूमौ शस्त्रेण घातनम् ॥ ४ ॥
अनृतं भाषितं यच्च किञ्चिद् वृक्षस्य पातनम् ।
एतत्सर्वं क्षमस्वैनो यन्मया दुष्कृतं कृतम् ॥ ५ ॥
गृहार्थं यत्कृतं पापमज्ञानेनाथ चेतसा ।
तत्सर्वं क्षम्यतां देव गृहशालां शुभां कुरु ॥ ६ ॥
सशैलसागरां पृथ्वीं यथा वहसि मूर्द्धनि ।
तथा मां वह कल्याणसम्पत्सन्ततिभिः सह ॥ ७ ॥ इति

ततः मृन्मयपिधानेन पेटिकामाच्छाद्य तस्मिन् गर्त्ते शनैर्निक्षिपेत् । ततः पूर्वखातमृदा पूरयेत् । गर्तोपरि भूमिं गोमयादिनोपलिप्य गन्धादिभिर्भूषयेत् । ततः प्रागादिभित्तीनामभिमर्शनम् । तत्र मन्त्राः क्रमेण—

ॐ श्रीश्च त्वा यशश्च पूर्वे सन्धौ गोपायेताम् १ ॐ यज्ञश्च त्वा दक्षिणा च दक्षिणे सन्धौ गोपायेताम् २ ॐ अन्नं च त्वा ब्राह्मणश्च पश्चिमे सन्धौ गोपायेताम् ३ ॐ ऊर्क् च त्वा सूनृता चोत्तरे सन्धौ गोपायेताम् ४ इति । अथ प्रागादिदिशासुपस्थानम् । तत्र मन्त्राः क्रमेण—ॐ केता च मा सुकेता च पुरस्ताद्गोपायेतामित्यग्निर्वै केताऽऽदित्यः सुकेता तौ प्रपद्ये ताभ्यान्नमोऽस्तु तौ मा पुरस्ताद्गोपायेतामिति १ ॐ गोपायमानं च मा रक्षमाणा च दक्षिणतो गोपायेतामित्यहर्वै गोपायमानꣳ रात्री रक्षमाणा ते प्रपद्ये ताभ्यां नमोऽस्तु ते मा दक्षिणतो गोपायेताम् २ ॐ दीदिविश्च मा जागृविश्च पश्चाद् गोपायेतामित्यन्नं वै दीदिविः प्राणो जागृविस्तौ प्रपद्ये ताभ्यां नमोऽस्तु तौ मा पश्चाद् गोपयेताम् ३ ॐ अस्वप्नश्च माऽनवद्राणश्चोत्तरतो गोपायेतामिति चन्द्रमा वा अस्वप्नो वायुरनवद्राणस्तौ प्रपद्ये ताभ्यां नमोऽस्तु तौ मोत्तरतो गोपायेताम् ४ इति । ( पार. गृ. ३।४।१०—१८ ) ततः पूर्णाहुतिं कृत्वा संस्रवप्राशनम्, पवित्राभ्यां मार्जनम्, पवित्रप्रतिपत्तिं पूर्णपात्रदानं च कृत्वा आचार्यादिभ्यो दक्षिणां (१) गां च दत्वा भूयसीं च दत्वा

---

(१) वास्तुयागान्ते दक्षिणोक्ता वास्तुयागतत्त्वे—"एवं निष्पाद्य विधिना वास्तुयागं सुरोत्तम । सुवर्णं गां च वस्त्रं च आचार्याय निवेदयेत्" इति । विश्वकर्मप्रकाशे च ( ६।२५६-२६२ ) "ततस्तु प्राङ्मुखो भूत्वा आचार्याय निवेदयेत् । दक्षिणां, ब्रह्मणे दद्याद्यथावित्तानुसारतः । उदङ्मुखाय च ततः क्षमस्वेति पुनः पुनः । गां सवत्सां स्वर्णयुतां तथा वासोयुगान्विताम् । यज्ञान्ते आप्लुतान्वस्त्रानाचार्याय निवेदयेत् । दैवज्ञं च ततस्तोष्य स्थपतीन् वैष्णवानपि । दक्षिणां च ततो दद्याद् घृते छायां विलोकयेत् । रक्षाबन्धं मन्त्रपाठं त्र्यायुषं च

ब्राह्मणभोजनं संकल्प्य (१) सपरिवारं यजमानमभिषिञ्चेत् ।

अथाभिषेकमन्त्राः विश्वकर्मप्रकाशे उक्ताः ते यथा—

सुरास्त्वामभिषिञ्चन्तु ये च वृद्धाः पुरातनाः ।
ब्रह्मा विष्णुश्च शम्भुश्च साध्याश्च समरुद्गणाः ॥ १ ॥
आदित्या वसवो रुद्रा अश्विनौ च भिषग्वरौ ।
अदितिर्देवमाता च स्वाहा सिद्धिः सरस्वती ॥ २ ॥
कीर्तिर्लक्ष्मीर्धृतिः श्रीश्च सिनीवाली कुहूस्तथा ।
दितिश्च सुरसा चैव विनता कद्रुरेवच ॥ ३ ॥
देवपत्न्यश्च याश्चोक्ता देवमातर एव च ।
सर्वास्त्वामभिषिञ्चन्तु शुभाश्चाप्सरसां गणाः ॥ ४ ॥
नक्षत्राणि मुहूर्ताश्च पक्षाहोरात्रसन्धयः ।
संवत्सरा दिनेशाश्च कलाकाष्ठालवक्षणाः ॥ ५ ॥
सर्वे त्वामभिषिञ्चन्तु कालस्यावयवाः शुभाः ।
वैमानिकाः सुरगणा मनवः सागरैः सह ॥ ६ ॥
सरितश्च महाभागा नागाः किंपुरुषास्तथा ।
वैखानसा महाभागा द्विजा वैहायसाश्च ये ॥ ७ ॥
सप्तर्षयः सदाराश्च ध्रुवस्थानानि यानि च ।
मरीचिरत्रिः पुलहः पुलस्त्यः क्रतुरङ्गिराः ॥ ८ ॥
भृगुः सनत्कुमारश्च सनकोऽथ सनन्दनः ।
सनातनश्च दक्षश्च जैगीषव्योऽथ गन्धरः ॥ ९ ॥
एकतश्च द्वितश्चैव त्रितो जाबालिकश्यपौ ।
दुर्वासा दुर्विनीतश्च कविः कात्यायनस्तथा ॥ १० ॥
मार्कण्डेयो दीर्घतपाः शुनःशेपो विदूरथः ।
और्वः संवर्त्तकश्चैव च्यवनोऽत्रिः पराशरः ॥ ११ ॥
द्वैपायनो यवक्रीतो देवरातश्च सानुगः ।
प्रजापतिर्दितिश्चैव गावो विश्वस्य मातरः ॥ १२ ॥
पर्वतास्तरवः कल्पाः पुण्यान्यायतनानि च ।
वाहनानि च रत्नानि लोकाश्चापि चराचराः ॥ १३ ॥
अग्नयः पितरस्तारा जीमूताः खं दिशो जलम् ।
एते चान्ये च बहवः पुण्यसङ्कीर्त्तनाश्च ये ॥ १४ ॥
तोयैरेतैः पवित्रैश्च मन्त्रौषधिबलान्वितैः ।
शुभैस्त्वामभिषिञ्चन्तु सर्वोत्पातनिबर्हणैः ॥ १५ ॥ इति

---

समाचरेत् । ऋत्विग्भ्यो दक्षिणां दद्याच्छिष्टेभ्यश्च स्वशक्तितः । दीनान्धकृपणेभ्यश्च दद्याद्वित्तानुसारतः । संप्राप्नोति नरो लक्ष्मीं पुत्रपौत्रधनान्विताम्' इति ।

(१) "अकपाटमनाच्छन्नमदत्तबलिभोजनम् । गृहं न प्रविशेद्धीमान् विपदामाकरं हि तत्" इति वचनात् गृहे ब्राह्मणानां भोजनं कृत्वा गृहप्रवेशः कार्यः ।

ततस्तिलकाशीर्वादं रक्षाबन्धनं त्र्यायुषं घृते छायादर्शनं च कृत्वा देवान् विसृज्य यस्य स्मृत्येत्यादि पठेत् ॥

अथ प्रवेशसमये गणपतिं सम्पूज्य ब्राह्मणैः कृतस्वस्त्ययनः मङ्गलतुर्यशान्तिपाठेन सजलकलशः ब्राह्मणपुरस्सरं पुत्रपौत्रकलत्रादियुतः सतोरणां सध्वजपताकं (१) गृहमागत्य द्वारसमीपे उपविश्य "अस्मिन्पुण्याहे श्रौतस्मार्त्तकर्मकरणार्थं संस्कारानेकभोगैश्वर्यादि विविधमङ्गलोदयसिद्धये एतन्नवीनगृहप्रवेशमहं क० । द्वारशाखापूजनम् । तत्र तन्मन्त्रौ-स्थापितेयं मया शाखा शुभदा ऋद्धिदाऽस्तु मे । सुपूजिता-मया शाखा सर्वदा सुस्थिराऽस्तु मे १ यो धारयति सर्वेशो जगन्ति स्थावराणि च । धाता दक्षिणशाखायां पूजितो वरदोऽस्तु मे २ ॐ धात्रे नमः । यः समुत्पाद्य विश्वेशो भुवनानि चतुर्दश । विधाता वामशाखायां स्थिरो भवति पूजितः ॐ विधात्रे नमः ।

ऊर्ध्वम्—गजवक्त्र गणाध्यक्ष हे हेरम्बाम्बिकात्मज । विघ्नान् निवारयाशु-त्वमूर्ध्वोदुम्बरसंस्थितः । ॐ गणपतये नमः । अधो देहल्याम्—यस्याः प्रसादात् सुखिनो देवाः सेन्द्राः सहोरगाः । सा वै श्रीर्देहलीसंस्था पूजिता ऋद्धिदाऽस्तु मे । देहल्यै नमः । अथ द्वाराभिमुखो भूत्वा "धर्मार्थकामसिद्ध्यर्थं पुत्रपौत्राभिवृद्धये । त्वामहं प्रविशाम्यद्य भगो मन्दिर ते नमः ॥ १ ॥ यावच्चन्द्रश्च सूर्यश्च यावत्तिष्ठति मेदिनी । तावत्त्वं मम वंशस्य मङ्गलाभ्युदयं कुरु ॥ २ ॥ इत्युक्त्वा प्रविशेत् । तत्र मन्त्रः—( पार०गृ० ३।४ ) ॐ धर्मस्थूणाराज श्रीस्तुपमहोरात्रे द्वारफलके इन्द्रस्य गृहा वसुमन्तो वरूथिनस्तानहं प्रपद्ये सह प्रजया पशुभिः सह । यन्मे किञ्चिदस्त्युपहूतः सर्वगणः सखायः साधु संवृतः । तां त्वा शालेऽरिष्टवीरा-गृहान्नः सन्तु सर्वतः" इति देहलीमस्पृशन् दक्षिणपादपुरःसरमन्तः प्रविश्य प्रधानगृहमध्ये आग्नेय्यां दिशि तं कलशं संस्थाप्य अस्मिन्नूतनगृहे पुण्याहं कल्याणं श्रीरस्तु इति वाचयित्वा लक्ष्मीं सम्पूजयेत् । गृहस्य धारकं स्तंभं पूजयेत् —धारणार्थं महाभाग निर्मितो विश्वकर्मणा । स्थापितः शुभदो नित्यं गृहभारक्षमो भव ॥ १ ॥ दीपस्थाने दीपं प्रज्वाल्य "तिमिरस्य तिरस्कर्त्ता ज्योतीरूपः सुविश्रुतः । विघ्नान्धकारनाशाय पूजयामि सुसिद्धिदम् । ॐ दीपाय नमः ।

महानस इति ख्यातो देवयज्ञादिसिद्धिकृत् । अन्नादिसाधनं स्थानं धर्ममूलं शुभप्रदम् ॥ चुल्ह्यां धर्माय नमः । सम्मार्जनस्थाने—पूतना शुभदा ज्येष्ठा

---

(१) गृहप्रवेशाङ्गत्वेन पताकादिरोपणप्रकारो विश्वकर्मप्रकाशे ( १०।९८-१०१ ) विहितः । "वितानैस्तोरणैः पुष्पैः पताकाभिर्विशेषतः । अलङ्कृत्य नवं गेहं देहलीं पूजयेत्ततः । दिक्पालांश्च तथा क्षेत्रपालं ग्रामाधिदैवतान् । प्रणम्य विधिवत्पूज्य द्वारमार्गे विशेद् गृहम् । पूजयेद्गणनाथं च मातृकाश्च विशेषतः । वसोर्धारां पातयित्वा ग्रहांश्चैव तु पूजयेत् । वास्तुनाथं च संपूज्य ब्राह्मणान् भोजयेत्ततः । गोदानं भूमिदानं च कुर्याच्चैव यथाविधि" इति । गृहेऽपि पताकाः कुण्डसिद्ध्युक्तवर्णाचिता दश कार्या इत्युक्तं विश्वकर्मप्रकाशे (१३।१०-१०९) यद् द्वारमार्गे पूर्वे तु ध्वजः षोडशहस्तकः । स्तंभोऽस्य विधिवत् स्थाप्यः सघण्टाकिङ्किणीयुतः" इति ।

सदा सन्धानसंस्थिता । स्थानं चोत्करसम्पत्तेरस्तु मे सर्वसिद्धिदम् । ज्येष्ठायै नमः । जलस्थाने—शङ्खस्फटिकवर्णाभश्वेतहाराम्बरावृत । पाशहस्त महाबाहो दयां कुरु दयानिधे । वरुणाय नमः । पेषण्याम्—सौभाग्यं सुभगे देहि पेषणी संस्थिता सदा । पिष्टनिष्पादनार्थं त्वं पूजिता शुभदाऽस्तु मे । ॐ सुभगायै नमः ।

उलूखले—व्रीहीणां कण्डनं यच्च तुषाणाश्च विमोचनम् ।
त्वदधीनमतः पूजां करोमि तव सिद्धये ॥ रौद्रपीठये नमः ।
शय्यायाम्—कामः कामप्रदो मेऽस्तु शयनीये सुपूजित ।
पूजां गृहाण सुमुख धनधान्यसमृद्धये ॥ ॐ कामाय नमः ।
गृहमध्ये—मध्ये सुपूजिता देवाः सन्तु मे सर्वसिद्धिदाः ।
नश्यन्तु सर्वविघ्नानि देवानां पूजनादिह ॥ सर्वदेवेभ्यो नमः ।
पशुस्थाने—सर्वाधिपो महादेव ईशानः शुक्लशङ्करः ।
पशूनां पतिरस्माकं पूजितः शुभदः सदा ॥ ॐ पशुपतये नमः ।

एतदनन्तरं वा पूर्णाहुत्यादि विजसर्जनान्तं पूर्वोक्तं कुर्यात् ।

इति श्रीविद्याधरशर्मसंगृहीतो गृहप्रवेशः ॥ शुभम् ॥

## अथ परिशिष्टम् ।

अथ ग्रन्थादौ वास्तुपुरुषस्वरुपकथनं परमावश्यकम् तच्चमया न लिखितम् अतोऽत्र वास्तुपुरुषस्वरुपं प्रदर्श्यते ।

तथाच बृहस्पतिः

पुराकृतयुगे ह्यासीन्महद्भूतं समुत्थितम् ।
व्याप्यमानं शरीरेण सकलं भुवनं ततः ॥
तद्दृष्ट्वा विस्मयं देवा गताः सेन्द्रा भयावृताः ।
ततस्तैः क्रोधसन्तप्तैर्गृहीत्वा तमथासुरम् ॥
विनिक्षिप्तमधोवक्त्रं स्थितास्तत्रैव ते सुराः ।
तमेव वास्तुपुरुषं ब्रह्मा समभिकल्पितम् ॥

पूर्वं ध्रुवादीनां नामानि लिखितानि ध्रुवश्च धान्यञ्चेत्यादिना तत्र प्रस्तार प्रकारो रत्नमालायाम् ।

स्थापयेल्लघुमधोगुरोः परंस्याद्यथोपरि तथैव पूरयेत् ।
पश्चिमं च गुरुभिः पुनः पुनः सर्वलघ्ववधिरित्ययं विधिः ॥

इत्यादिना ध्रुवादिगृहाणांप्रस्तारवशेन षोड़शप्रकाराः सिद्धयन्ति यथोक्तम् रत्नमालायाम्—

प्रदक्षिणं सद्ममुखादलिन्दं विद्याल्लघुस्थानसमाश्रितञ्च ।
गृहस्य पूर्वादिगतेष्वलिन्देष्वेवं भवेयुर्दशषट्कभेदा इति ॥

तद्यथा—

पू.द.प.उ.=दिशा
ऽ ऽ ऽ ऽ=ध्रुवम्
। ऽ ऽ ऽ=धान्यम्
ऽ । ऽ ऽ=जयम्
। । ऽ ऽ=नन्दम्
ऽ ऽ । ऽ=खरम्
। ऽ । ऽ=कान्तम्
ऽ । । ऽ=मनोरमम्
। । । ऽ=सुमुखम्
ऽ ऽ ऽ ।=दुर्मुखम्
। ऽ ऽ ।=उग्रम्
ऽ । ऽ ।=रिपुदम्
। । ऽ ।=वित्तदम्
ऽ ऽ । ।=नाशम्
। ऽ । ।=आक्रान्तम्
ऽ । । ।=विपुलम्
। । । ।=विजयाख्यम्

अत्रेदमवधेयम्, प्रथमभेदे ध्रुवाख्यमूर्ध्वमुखं गृहम्, द्वितीयेपूर्वद्वारं धान्याख्यं, तृतीये दक्षिणद्वारं जयाख्यम् । चतुर्थे प्राग्दक्षिणद्वारं नन्दाख्यम् । पञ्चमे पश्चिमद्वारं खराभिधम् षष्ठभेदे पूर्व पश्चिमद्वारं कान्ताख्यम् । सप्तमे दक्षिणपश्चिमद्वारं मनोरमम् । अष्टमे पूर्व दक्षिण पश्चिमद्वारं सुमुखम् । नवमे सौम्यद्वारं दुर्मुखाख्यम् । दशमे पूर्वोत्तरद्वारमुग्राख्यम् । एकादशे याम्यसौम्यद्वारं रिपुदम् । द्वादशे पूर्व दक्षिणोत्तरद्वारं धनदाख्यम् । त्रयोदशे पश्चिमोत्तरद्वारं नाशाख्यम् । चतुर्दशे पूर्वपश्चिमोत्तरद्वारमाक्रन्दम् । पञ्चदशे याम्य पश्चिम सौम्यद्वारम् विपुलाख्यम् षोड़शभेदे चतुर्दिक्षुद्वारं विजयाख्यमिति ।

पिण्डानयने इष्ट नक्षत्र कल्पनायां ज्योतिःसागरे—

आर्द्रादितिर्गुरुश्चैव सर्पश्चैवपिताभगम् । शतभंपूर्वयुग्मं च नवेष्टा गृहतारकाः । एवमेव वास्तुप्रदीपे—त्रिभिस्त्रिभिर्वेश्मनिकृत्तिकातः उद्वेगपुत्राप्ति धनातिशोकः । शत्रोर्भयं राजभयश्चमृत्युः सुखंप्रवासश्चनवप्रभेदा इति ।

विष्णुं व्यकायेत्यस्योपपत्तिः—

अत्र प्रथमालापघटितमेव कल्प्यते पिण्डमानं=८ या + आ, इदं पिण्डमानं पुनरष्टगुणितं सप्तविंशतिभक्तं तथा स्वरूपान्तरादिकरणेन यातं

$$\frac{१० \text{ या} + ८ \text{ आ}}{२७} = \frac{१० \text{ या} + ८ \text{ आ} + ८ - ८}{२७} = \frac{१० \text{ या} + ८(\text{आ} - १) + ८}{२७}$$

$$= \frac{१० \text{ या} + ८ \text{ व्येकाय} + ८}{२७} = \frac{१० \text{ या} + २७ \text{ व्येकाय} - १९ \text{ व्येकाय} + ८}{२७}$$

$$= \frac{१० \text{ या} - १९ \text{ व्येकाय} + ८}{२७}$$ =अत्र लब्धिमानं कालकं शेषं नक्षत्रसंख्यासमं, तथा हरलब्धिघातः शेषयुतो भाज्यसमो भवतीति जातंतुल्यं पक्षद्वयम् १० या—१९ व्येकाय + ८=२७ का + न, ततः समशोधनादिना जातं कालकमानम्

$$= \frac{१० \text{ या} - १९ \text{ व्येकाय} + ८ - \text{न}}{२७} = \frac{१० \text{ या} - (१९ \text{ व्येकाय} + \text{न}) + ८}{२७}$$

अत्र यदि १९ व्येकाय + न=शे कल्प्यते तदा जातं कालकमानम्= $\frac{१० \text{ या} - \text{शे} + ८}{२७}$

अत्र रूपसमे धनक्षेपे १०, २७ दृढ़ भाज्य हाराभ्यां जातेगुणलब्धी ८, ० तथा "यदागतौ लब्धिगुणावित्यादिना ऋणक्षेपे गुणः" १६ तथात्र "अभीप्सितक्षेप विशुद्धिनिघ्ने" इत्यादिना यदि—शे+८ इदं मानं धनं भवेत्तदा पूर्वागतेनानेन ८ गुणेन गुणितं २७ तष्टमभीष्टो गुण एव "ते भाज्यतद्भाजक वर्णमाने" इत्यादिना यावत्तावन्मानं भवति । तथात्र यदि—शे+८ मानं ऋणं तदा द्वितीयेनानेन १६ गुणेन गुणितं २७ तष्टं शेषं यावन्मानं भविष्यति । अत्राचार्येण शे इत्यस्य मानं एकद्वित्र्यादि संख्यातुल्यं प्रकल्प्य अभीष्टानि यावत्तावन्मानानि साधितानि तद्यथा यदि शे=१ तदा—शे+८=—१+८=७ इदं धनमतः इयंसंख्या पूर्वगुणेन ८ गुणिता सप्तविंशतिभक्ता जातं =२ शेष मिदमेव यावत्ता-वन्मानम् एवं यदि शे=२ तदा—शे+८=—२+८=६ धनम् तदात्रापि कुट्टकेन=२१ इदं द्विशेषे यावन्मानम् एवं यदा शे=८ | तदा—शे+८=० तदा यावन्मानं शून्यसमं वा "इष्टाहत स्वस्वहरेणे" त्यादिना सप्तविंशतिसमं भविष्यति । अथ यदि शे=६ तदा—शे+८=—१ इदं ऋणात्मकम् । अत इयं संख्या द्वितीयेन गुणेना १६ नेन गुणिता सप्तविंशति भक्ता लब्धं यावन्मानम् =१६ एवं मानानि आगच्छन्ति । तत एभियावत्तावन्मानैः पिण्डमानेऽस्मिन् ८ या+आ । उत्थापनेन पिण्डमानमुपपद्यते ।

अथ यदि पिण्डे नक्षत्रायतक्षणयोः सप्तविंशति भाग २७, ८ तुल्ययोर्घातो निक्षिप्यते तदा तक्षणाभ्यां भक्ते क्षेपस्य निःशेषत्वात् त एव नक्षत्रायमाने आग-मिष्यतस्तेन सोऽपि पिण्डो भवितुमर्हतीत्युपपद्यते श्रीसुधाकर द्विवेदि कृतं "इष्टायनन्देन्दुहतिरित्यादि पद्यम् ।

### "इष्टभात्यष्टिघाते य" इत्यस्योपपत्तिः ।

अत्र पिण्डमानं प्रथमं तथा कल्प्यं येन प्रथमालापो घटते इत्येतदर्थं या संख्याऽष्टभिर्गुणिता रूपोना सप्तविंशतिहृता निःशेषा भवति तादृशी प्रथमा संख्या कुट्टकेन १७ अतः कल्पितं पिण्डमानं २७ या+१७ न इदमिष्टगुणं २७ भक्तं शेषमिष्टनक्षत्रमेव तेन प्रथमालापः स्वयं घटते । पुनरिदमष्टभिस्तष्टं प्रथम-स्थाने ३ या द्वितीयस्थाने सप्तदशेष्टनक्षत्रघातोत्पन्न आय एव तज्ज्ञापकः यदि आ कल्प्यते तथेष्टायश्च इआ कल्प्यते ततो जातं शेषमानं ३ या+आ इदमष्टहृतम् । अत्र कल्प्यते लब्धिः=का, तथा हरलब्धिघातः इष्टायरूप शेष युतो भाज्यसम इत्यनेन जातौ पक्षौ ३ या+आ=८ का +इआ समशोधनादिना यावन्मानम्=

$$\frac{८\text{का}+\text{इआ}-\text{आ}}{३}$$

अत्र यदि इआ—आ इदं ऋणात्मकं तथा का=नी+१ प्रकल्प्य जातं यावतावन्मानस्य रूपान्तरमिदम्=

$$\frac{८(\text{नी}+१)+\text{इआ}-\text{आ}}{३}$$

$$=\frac{८\text{नी}+८+\text{इआ}-\text{आ}}{३}$$

उभयत्र यदि भाज्यमानं त्रिभिर्निःशेषं भवति तदैव यावत्तावन्मानमभिन्नं भविष्यतीतिस्पष्टम् अतो कालकमानं नीलकमानं वा

तथा कल्प्यं यथा यावत्तावन्मानमभिन्नं स्यात् ततो यावत्तावन्मानेन पूर्वकल्पित-पिण्ड २७ या + १७ न इदं समुत्थाप्य स्फुटा पिण्डमिति बोध्येति सर्व-मुपपन्नम् ।

गजैस्तष्टमिष्टोङ्गशोध्यमिति ।

कुट्टकेन ज्ञातं या संख्या सप्तविंशतिगुणाऽष्टभक्ता शेषं रूपमुत्पादयति सा त्रिमिता ततः कल्पितं पिण्डमानम् ८१ या + १७ न येन प्रथमालापस्य संगति-र्भवति । पुनः पिण्डमानमिदं ८१ या + १७ न अष्टभिर्भक्तं जातं या + न अस्य द्वितीयखण्डे 'न' इत्यत्र पुनर्वसुभिर्भक्ते शेषं = शे तथा कृतेजातं या + शे इदमप्यष्ट-भक्तमत्रलब्धिः = का शेषमिष्टायसममिति । अत्रापि हरलब्धिघातस्य इष्टाय-रूपशेषयुतस्य भाज्यराशेस्तुल्यत्वात् जातौ तुल्यौ पक्षौ या + शे = ८का + इआ समशोधनादिना या = ८ का + इआ − शे अत्रापि यदि इआ − शे इदं ऋणात्मकं तदा नी + १ = का प्रकल्प्यजातं यावन्मानम् = ८(नी + १) + इआ − शे = ८ नी + ८ + इआ − शे, यावत्तावन्मानद्वये कालकनीलकयोर्मानं शून्यसमं प्रकल्प्य जातं यावत्तावन्मानम् = इआ − शे वा, ८ + इआ − शे आभ्यां यावत्तावन्मानमिदं ८१ या + १७ न समुत्थाप्य व्यक्तं पिण्डमानं ज्ञेयम् । नक्षत्रायतत्क्षणयोरनयो २७, ८ घातस्य २१६ रूपस्य योजनेनापि विकाराभावात् पिण्डमानमागच्छती-त्युपपन्नं सर्वम् ।

नागघ्नेष्टायात्स्यतेदिष्टमृक्षमिति ।

प्रथमं या संख्याऽष्टगुणिता सप्तविंशतिहृता २६ शेषमुत्पादयति तादृशी प्रथमा संख्या कुट्टकेन ज्ञाता ६४ अतः कल्पितं पिण्डमानम् = ६४ या + इआ इदं वसुभिर्भक्तं शेषमिष्टायसमो भवतीति प्रथमालापः स्वयं घटते । पुनरिदं पिण्डमानं नागैर्गुणितं २७ भक्तं जातं शेषं—या + ८ इआ इदमपि सप्तविंशति-भक्तं लब्धं कालकं शेषमिष्टनक्षत्रतुल्यं तथा शेष युतस्य हरलब्धिघातस्य भाज्यराशेस्तुल्यत्वात् जातौ पक्षौ −या + ८इआ = २७का + इन अत्र समशोधनादिना लब्धं यावत्तावन्मानं = − २७ का + ८ इआ − इन यद्यत्र ८ इआ − इन = ऋणात्मकं तदा नी = १ + का प्रकल्प्य यावत्तावन्मानस्य स्वरूपान्तरमिदम् = —२७( नी—१ ) + ८इआ—इन = —२७नी + २७ + इआ —इन । उभयत्र क्रमेण कालकमानं नीलकमानं च शून्येनोत्थाप्य जातं या = ८ इआ—इन वा इआ—इन + २७ ततो यावत्तावन्मानेन पिण्डमानेऽस्मिन्—६४ या + इआ उत्थापनेन पिण्डमानं सुबोधं भवति । अत्र पिण्डे नक्षत्राय-तत्क्षणयोर्घातस्य २७ × ८ = २१६ निक्षेपणेनापि विकाराभावात् पिण्डमानं भवती-त्युपपन्नं सर्वम् ।

व्यकेष्टर्क्षहताः द्विवाण शशिनइत्यादेः ।

कल्प्यते पिण्डमानम् = या, इदं नागैर्गुणितं २७ भक्तं लब्धं कालकं प्रकल्प्य शेषं नक्षत्रमानं तथा हरलब्धिघातः शेषयुतो भाज्यराशि तुल्यो भवतीति

नियमात् जातौ तुल्यौ पक्षौ ८ या = २७ का + इन अतः या = $\frac{\text{२७ का + इन}}{\text{८}}$
पुनः पिण्डमानमिदं या वसुभिर्भक्तं लब्धं नीलकं शेषमिष्टं प्रकल्प्य पुनर्जातं यावत्तावन्मानम् = $\frac{\text{८ नी + इआ}}{\text{१}}$ अत्र यावत्तावन्माने तुल्ये अतः $\frac{\text{२७ का + इन}}{\text{८}}$ = ८ नी + इआ समशोधनादिना जातं कालकमानम् = $\frac{\text{६४ नी + ८ इआ — इन}}{\text{२७}}$ ततः ६४, २७ दृढ़ भाज्यहाराभ्यां रूपक्षेपे जातौ लब्धिगुणौ १६, ८ अत्र "ते भाज्यतद्भाजक वर्णमाने" इत्यादिना गुण एव नीलकनानं तेन अभीप्सितक्षेप विशुद्धिनिघ्ने "इत्यादिना रूपक्षेपीयो गुणोऽय ८ मिष्ट क्षेपेणानेन ८ इआ —इन गुणिते । जातः ६४ इआ—८ इन स्वहारेणानेन २७ भक्ते जातः १० इआ—८ इन ततः इष्टाहतस्वस्वहरेण युक्त" इत्यादिना कल्पितेष्टपीतक गुणित तद्धारेण सहितो जातं २७ पी × १० इआ — ८ इन = नीलकमानम् नीलकमानेन यावत्तावन्माने उत्थाप्यजातं यावत्तावन्मानम् = २१६पी + ८१ इआ —६४ इन, अत्र कल्प्यते पीतकमानं = लो + ( न—१ ) तत उत्थापनेन जातं यावत्तावन्मानम् = २१६ लो + २१६ इन— २१६ + ८१ इआ — ६४ इन

= २१६ लो + १५२ इन—२१६ + ८१ इआ

= २१६ लो + १५२ इन—१५२—८१ + १७ + ८१ इआ

= २१६ लो + १५२ ( इन—१ ) + ८१ ( इआ—१ ) + १७

अत्रान्तिमखण्डत्रये यदि संख्या २१६ तोऽधिकाभवेत्तदा लोहितकस्य तथा ऋणमानं कल्प्यं यथा तन्मान गुणित भूपाश्विभी रहिता सा खण्डत्रयभवा संख्या धनात्मिका भूपाश्विभ्योऽल्पा च स्यात् । अर्थात् सा संख्या २१६ भिस्तष्टाऽवशेषं तदेवपिण्डमानं ज्ञेयं तस्मिन्नेकादि गुणित भूपाश्विसमां संख्यां प्रक्षिप्यानेकधा पिण्डमानं साध्यमित्युपपन्नम् अनयैवोपपत्त्या एकोनिनेष्टघ्नेत्यादि रामदैवज्ञकृतं पिण्डानयनमुपपद्यते ।

टेड़ूराहीति प्रसिद्धे हरपुरनगरे मण्डले सारनाख्ये
विप्रोऽभूद्देविदत्तःप्रथितगुणगणो यो द्विवेदीति वित्तः ।
तस्यासन् वह्निसंख्या निजतनुमहसा वह्निवद्भासमानाः
पुत्रास्तेष्वग्रजोऽयं भवति बुधवरः श्रीगरीव द्विवेदी ॥ १ ॥
सूनुना तस्य श्रीरामनिहोरेण सतांमुदे ।
वास्तुमाला सुवृहती संगृहीता प्रयत्नतः ॥ २ ॥
चन्द्रवाणवसुचन्द्र सम्मिते शालिवाहन शकेऽथ फाल्गुने ।
कृष्णापक्ष शिवरात्रिके वृहद्वास्तुमालिक कृतिः समापिता ॥ ३ ॥

॥ शुभम्भूयात् ॥

# शुद्धि पत्रम् ।

| पृष्ठ | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २ | २५ | गणेय | गणये |
| ५ | ८ | भिश्र | मिश्र |
| ८ | २१ | करी | करीं |
| १२ | १६ | थोगदम् | थादगम् |
| १५ | ६ | र्कतुराधुंध | कर्त्तुरायुर्ध |
| ३० | ५ | यमराक्षयो | यमराक्षसयो |
| ३२ | २६ | शल्य | शल्यं |
| ३६ | १२ | प्रथमे | प्रथमं |
| ३६ | १२ | स्फुटम् | स्फुटाम् |
| ३७ | २ | कृतेक्षिति | कृताक्षिति |
| ४१ | २४ | उनाघ्ने | नागघ्ने |
| ४५ | २ | भ्रमं | भ्रमो |
| ५० | ६ | पिण्ड | पिण्डं |
| ६२ | १० | वज्रावपि | वज्राअपि |
| ६७ | १६ | भङ्ग | भङ्गः |
| ७४ | १६ | समन्विता | समन्विताः |
| ७४ | १८ | वसते | वसतिः |
| ७६ | ४ | संयुतं | संयुक्तं |
| ८५ | २६ | देर्ध्येण | दैर्ध्येण |
| ८६ | १५ | धिष्णय | धिष्णये |
| ६३ | ७ | वक्क | वक्त्रे |
| १०० | १५ | श्रीग्न | अग्नि |
| १०२ | ६ | दक्षिणे | दक्षिणे |
| १०३ | १४ | भागत्रय | भागत्रयं |
| १०८ | १ | ताह | आह |
| १३३ | १३ | सूर्नोनाशः | सूनोर्नाशः |
| १३६ | ६ | प्राजापात्यं | प्राजापत्यं |
| १३६ | १२ | पालविता | पालीवता |
| १४४ | २ | वल्लाकि | वल्लीक |
| १४८ | २७ | काष्ठक | कोष्ठक |
| १५१ | १५ | विमानन्द | विमाननन्द |
| १५६ | ३ | ब्राह्म | ब्राह्मे |
| १५७ | ७ | मार्गशीर्ष | मार्गशीर्षे |
| १६५ | ५ | असिद्धि | सिद्धिः । |

पृष्ठ १३६ में श्लोक १२६ के बाद श्लोक १३३ तक श्लोकाङ्क में भूल है

# सूचना

अर्थ धर्म काम और मोक्ष इन चारो फलों का मूल आरोग्यता है अतएव इसका यत्न मनुष्य मात्र को करना चाहिये जिससे किसी प्रकार रोग उपस्थित न हो यदि कदाचित् हो भी जाय तो शीघ्रही आरोग्यता के निमित्त चाहिये कि किसी उत्तम चिकित्सक द्वारा आयुर्वेदीय औषधियों का सेवन करे। हमारे औषधालय में शास्त्रोक्त विधि से तैयार की हुई सभी औषधियां मिलती हैं। जैसे धातुभस्म, अभ्रकभस्म, चन्द्रोदयादि रस, लवङ्गादि चूर्ण, चन्द्रप्रभा वटी, चन्दनादि एवं लाक्षादि तैल, द्राक्षासव, अशोकारिष्ट महा-ज्वरांकुश रस आनन्दभैरव रस वगैरह, यहां पर विस्तार के भय से संज्ञा मात्र दिया हूं विशेष बातों का ज्ञान सूचीपत्र से होगा।


पता—वैद्यराज—

रामनन्दन द्विवेदी,

पो० मु० बरौली ( सारन )


---

# दैवज्ञ समिति काशी।

सर्व साधारण को विदित हो कि इस परम पवित्र काशी पुरी में उक्त नाम की समिति बहुत दिनों से सर्व साधारण के ज्यौतिष सम्बन्धि यावत्कार्यों को करती आरही है। आज तक यह समिति अपने जन्मदाता काशी हिन्दूविश्वविद्यालय के प्रधान ज्यौतिषशास्त्राध्यापक ज्यौ० पं० श्रीरामयत्न ओझाजी के संरक्षण में पालित हुई हैं। परन्तु अब कार्य विशेष बढ़ जाने और पाठन इत्यादि से अवकाश कम मिलने के कारण इसकी वृद्धि की आवश्यकता समझ कर निम्नलिखित सुयोग्य विद्वानों को उक्त पं० जी ने सदस्य नियुक्त किया है। आजकल यह समिति बड़ी सावधानी से अपने कार्य कलाप का परिचय दे रही है।

## दैवज्ञ समिति के सदस्य।

(१) ज्यौ० आ० पं० श्रीहृषीकेशोपाध्याय प्रो० सं० का० काशी
(२) ज्यौ० आ० पं० श्रीरामयत्न ओझा
(३) ज्यौ० आ० पं० श्रीरघुनाथ त्रिपाठी
(४) ज्यौ० आ० पं० श्रीचन्द्रशेखर झा
(५) ज्यौ० आ० पं० श्रीरामानन्द मिश्र
(६) ज्यौ० आ० पं० श्रीरामव्यास पाण्डेय

मन्त्री—
रामनिहोर द्विवेदी
मारवाड़ी संस्कृत कालेज,
काशी।